# BIBLIOTHECA INDICA:

## COLLECTION OF ORIENTAL WORKS



PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 14[illegible].

# PṚTHVĪRĀJA VIJAYA,

## A SANSKRIT EPIC WITH THE COMMENTARY OF JONARĀJA.




BY

S. K. BELVARKAR, M.A., PH.D.

FASC. I.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1914.

त्वात् । वेदा एव समुद्राश्च चतुस्संख्यत्वात्तेषां मेघं वर्धकं यो
महाभारताख्यं काव्यमकरोत् स व्यासो वो रचेत् ॥

असत्य* - - - - - - - -
- - - - - - - - - - - - - - - |
- - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - ||
— — — — — — — — — — — — — — — — —
— — — — — — — — — — — — — — — — — —
- - - - - - - - - - - - - -
10 - - - - - - - - - - - - - - - |
- - - - - - - - - - - - - -
- - - - - - - - - - - - - - - ||
— — — — — — — — — — — — — — — — —

रयत् । अन्तर्भावितण्यर्थोत्र करोतिः । वेदवत्सत्यं रामायणं
15 चकारेत्यर्थः । त्रिसंख्यत्वाच्च त्रय्यनुकरणम् । अतोऽस्माद्धेतो-
र्द्वितीयो मुनीन्द्रो व्यासः पुराणानां समसंख्यैरष्टादशभिः पर्वभिः
स्वकाव्यं पुराणजातमन्वचीकरत् । पुराणवत्सत्यं महाभारत-
मित्यर्थः । पर्वभिरिति 'हृक्रोरन्यतरस्याम्' इति तृतीया ॥

सत्काव्यसंहारविधौ खलानां
20 दीप्तानि वह्नेरपि मानसानि ।

* A large lacuna in consequence of the peeling off of the lower part of fol. 3*a*.

भासस्य काव्यं खलु विष्णुधर्मात्
सोऽप्याननात्पारतवन्मुमोच ॥

सतां काव्यं तद्विषये संहारविधौ दाहे दोषारोपणेऽग्नेरपि सकाशाद्दुर्जनानां चित्तानि दीप्तान्यजस्रानि(णि) भवन्ति। अत्र
5 साधनमाह। सोऽग्निरपि भासमुनेः काव्यं विष्णुधर्मान्मुखात्त्यक्तवान्। नादहदित्यर्थः। अत एव पारतवदित्युपमा। अग्निर्हि वस्त्वन्तरवत्पारतं दग्धुमशक्तो मुखान्मुञ्चति। भासव्यासयोः काव्यविषये स्पर्धां कुर्वतोस्तयोरुत्कर्षवर्तित्वेन परीक्षकान्तराभावात् परीक्षार्थमग्निमध्ये तयोर्द्वयोः काव्यद्वयं क्षिप्तम्। तयो-
10 र्मध्यादग्निर्विष्णुधर्मान्नादहदिति प्रसिद्धिः। खलैस्तु प्राप्तं सत्काव्यं दह्यते। इत्यग्नेस्सकाशात् खलानां दाहकत्वमित्यर्थः ॥

मध्येबुधं ये कवयो भवन्ति
बुधाः कवीनामपि सन्निधाने।
सर्वज्ञता मूर्खसभा(सु तेषां*)
15 लभ्येत विद्वत्कविगालिदानैः ॥

पण्डितमध्ये ये कविभावमेव नाटयन्ति तथा कविसन्निधौ पण्डितत्वं चाभिनयन्ति तेषां मूर्खसभासु सर्वज्ञता† लभ्येत। अत्र हेतुः। विद्वांसश्च ते कवयश्च तेषां गालिदानैराक्रोश-

* Supplied from the Com.

† कवित्वं विद्वत्त्वं च। (note in the MS.)

कथनैः विद्वत्कविविषया गालीश्श्रुत्वा ते स्वात्मानं नियतगुणं प्रकाशयन्ति। मूर्खसभास्विति विद्वत्सभासु गालिदानं विनैव तेषां नियतगुणत्वप्रकाशनार्थम् । विद्वत्वं कवित्वं चैकत्र न संभवतीति ——तम् । अथवा विदुषां कविनां मध्ये ——————
5 ——तस्तेषां पण्डि-(v l. कवि-)तत्वाभावः प्रकटो भवति ॥

विधानकुम्भानिव भू---
---मुत्साद्य कवीन्विधाता ।
राज्ञां विना पुण्यबलं करोति
तिरोहितान्मत्सरिकृष्णसर्पैः ॥

10 भूमौ राज्ञां पुण्यं विना पुण्यरहितानां राज्ञामयं खलः कवींस्तिरोहितान्करोति च्छादयति। किं कृत्वा। मत्सरिण एव कृष्णसर्पास्तैरुत्साद्य मत्सरिणश्चोदयित्वेत्यर्थः। यथा विधाता निधीन् कृष्णसर्पैरुत्साद्य तिरोधत्ते विना पुण्यबलम्। अयमिति प्रत्यक्षनिर्देशः। खलस्य कवितिरस्कारे स्वात्मप्रच्छादनाभावार्थः॥

15 विद्वान्कवेर्यो विहितानुकारः
----च्छादयितुं यतेत ।
वैरायमाणैस्स वराङ्गनाभ्य-
स्सख्यं न किं वर्षवरैः करोति ॥

कवि —————— ————————— ण्डितत्वं
20 गोपयति स वराङ्गनाभ्यो वैरं संघर्षं कुर्वद्भिर्वर्षवरैः शठैस्सख्यं

योग्यः । अत्र दृष्टान्तमाह । पेयत्वेनोद्धृतानां प — — — — ता — — थो — — — — — — — क्षिप्यते । पातव्यं जलं भस्मना क्षिप्तेन यथा त्याज्यतामेव प्राप्नोति तथा सरसमपि काव्यं पण्डितोपन्यस्तेनोपस्कारे — — — — — — — — — — — — — — ॥

5 परीक्षकाणां रुचिमाकलय्य
प्रकाशनीयः कविना प्रकर्षः ।
असात्विका - - - - - - - -
- - - (भि)षजा न योज्यः ॥

परीक्षकाणां बुद्धिं विचार्य कविना निजो द्र - - - - - -
10 -(रयस्ताः काव्यं न प्रकाशनीयमिति*) निस्सत्वां प्रकृतिं दृष्ट्वा तीक्ष्णोपशमो वैद्येन न प्रयोज्यः । अद्यतनानां रुचिः प्रतीतिलभ्येष्वर्थेषु नास्तीति मया ते नैवोपन्यस्ता इति सूचितम् ॥

न पण्डितानां कविरित्यसाध्यः
कर्णज्वरोयं यदि शाश्वतस्स्यात् ।
15 स्युरेव विद्यामधिकृत्य दूतीं
तन्मोक्षलक्ष्मीपरिरम्भयोग्याः ॥

अयं कविरस्तीति पण्डितानामसाध्यः कर्णज्वरो नित्यो यदि न भवेत्तद्विद्यामेव दूतीमधिकृत्य मोक्षलक्ष्म्याः परिरम्भे

* This part of the Com. is thus placed within brackets in the original MS.

योग्यास्ते भवेयुः । विद्यावन्तोऽपि कवौ मत्सरान्मोचं न लभन्ते
इति तात्पर्य्यम् । येषां चासाध्यः साधयितुमशक्यो ज्वरस्ते
दूतीमुखेनाङ्गनां न प्रबोधयन्ति ॥

ज्वलन्ति चेद्दुर्जनसूर्यकान्ताः
किं कुर्वते सत्कविसूर्यभासाम् ।
महीभृतां दोश्शिखरेनुरूढां
पार्श्वस्थितां कीर्तिलतां दहन्ति ॥

दुर्जनाश्च ते सूर्यकान्ताः । सूरीणां विबुधानामकान्ता
अरञ्जकाः । पण्डितद्विषां कवीनां दोषारोपणे सामर्थ्या-
10 भावात् । ते काव्यं श्रुत्वा यज्ज्वलन्ति तन्महाकविरविरुचां किं
कुर्वन्ति । कवीनां कीर्तिं हन्तुं न शक्नुवन्तीत्यर्थः । महीभृतां
राज्ञां शैलानां च भुजशिखरे जातां कीर्तिमेव लतां
निकटस्थितास्ते दहन्ति । दुर्जनसन्निधानात् कवयो राज्ञो न
स्तुवन्तीति तात्पर्यम् । सूर्यकान्तोपलाश्च ज्वलन्तः सूर्यांशून्
15 क्षपयन्ति किन्तु पर्वतानां पुनर्लता दहन्ति ॥

मात्सर्यगर्भोत्कटसूरिसर्प
व्याजिह्मताचापलदूषितापि ।
कवीन्द्रवाक्चन्दनकन्दलीयं
स्वाभाविकं मुंचति नाधिवासम् ॥

20 मात्सर्यगर्भेनोत्कण्ठा ये सूरयस्त एव सर्पास्तैर्व्याजिह्मता-

चापलाभ्यां दूषितापि सती कविराजोक्तिचन्दनलता स्वाभाविकं सौगन्ध्यं न त्यजति। खलाः काव्यं दूषयितुं न शक्ता इत्यर्थः ॥

निवेद्यते सण्म(न्म?)णिदर्पणानां
तेनैव सार्वः परिशुद्धभावः।
विभाव्यते तेषु यदात्मसंस्थ-

असज्जनैः स्वकीयं दोषमयत्वमेव तेषु सज्जनेषु यद्विभाव्यते दृश्यते। दुर्जनाः सज्जनान् दोषमयान् पश्यन्तीत्यर्थः। तेन सज्जनविषयदोषमयत्वदर्शनेनैव सतां मणिदर्पणानामिव सर्वहितं शुद्धत्वं प्रतिपाद्यते। शुद्धे दर्पणे ह्यात्मनिष्ठं वस्तु दृश्यते। अयमर्थः। दुर्जनाः स्वं दोषं सत्सु यत्पश्यन्ति। 'अस्मान् एते भाव्यन्ते' इति यच्छङ्कन्ते इत्यर्थः। तेनैव सतां शुद्धता प्रकटिता भवति। शुद्ध एव ह्यशुद्धस्य विरुद्धः ॥

गुणेषु लौल्यं सुजनस्य या-
- - - - - - - - - - - - -।
- - - - - - - - - - - - -
ततोऽधिकं - - - - - - - न्ते ॥

सतो - - - - - - - - रिमाणं लौल्यं श्रद्धा तत्परिमाणं

खलस्य लौल्यं दोषविषये भवति । ---- तात्पर्यम् । सूर्यो हि यावत्प्रकाशयति ततोऽधिकं तमस्तिरस्करोति ॥

दोषं गुणं वा पुरुषः परस्थं
यथा पिधाय स्वगतं पिधत्ते ।
कामं प्रकाश्यापि परस्थितं तं
प्रकाशयत्यात्मगतं तथैव ॥

परस्थं दोषं गुणं वा पिधाय छादयित्वा पुरुषस्तं स्वगतं पिधत्ते यथा तथा परस्थितं तं दोषं गुणं वा प्रकटीकृत्य स्वात्मनोऽपि तं प्रकटयति । अयमर्थः । परनिन्दया श्रोतारः
10 खलं कलयन्ति तस्मात्तु छादनेन सज्जनम् । परगुणस्तुत्या सज्जनम् ॥

वाग्देवतागर्भगृहस्य विद्या-
स्थानेषु सोपानतया स्थितेषु ।
साहित्यविद्यापरिचारिकेय-
15 मनन्वयं नाम रजः प्रमार्ष्टि ॥

सरस्वतीगर्भावासस्य सोपानभूतेषु चतुर्दशसु विद्यासु स्थानेष्वियं साहित्यविद्यैव परिचारिकाऽनन्वयं सम्बधविमूचण-मेव रजः प्रमार्ष्टि । उद्भ्रंशयति । साहित्यावगमेन विद्या-स्थानेषु प्रवेशः कर्तुं शक्यते इति साहित्येष्वादरः कर्तव्य
20 इत्यनेन निजोद्यमस्य सफलतां सूचयति कविः ॥

साधुः प्रमादात्त्यजति स्वभावं,
खलस्तु नारोहति साधुभावम् ।
निर्गन्धतामेति हि चन्दनादि
न सौरभं संघटते रसोने ॥

5 'प्रमादोनवजानते'त्यमरः । ततो हेतोस्साधुस्स्वभावं त्यजति । साधुत्वात्पततीत्यर्थः । खलः साधुत्वं नाधिरोहति । जलादिद्रव्यसंसर्गेण चन्दनादि गन्धरहितं भवति लशुने पुनः सौगन्ध्यं न संक्रामति ॥

मागाद्दिवं दुर्मतिराप्तविद्यो
10 न वेद कर्तव्यमिहापि लोके ।
खमुत्पतन्मा तिमयः सपथ्याः
स्थलेऽपि जानन्ति न जातु यातुम् ॥

विद्याप्राप्त्या स्वर्गप्राप्तिरित्यागमः । प्राप्तविद्यः खलः स्वर्गमाधिरुरुचदस्मिंल्लोकेऽपि कर्तव्यं न जानाति । मात्सर्याद्दुर्मति-
15 र्लोकद्वयाद्भ्रष्ट एवेत्यर्थः । दृष्टान्तमाह । सपक्षत्वादुचितमप्याकाशगमनं मत्स्या मा प्रापन् यावत्स्थलेऽपि ते नैव प्रक्रमन्ते । ---(पक्षाः?) विद्यास्थानीयाः । द्यावापृथ्व्यौ लोकद्वयस्थानीये । उत्पतन्निति पतेर्लुटि पक्षादेशाभाव---

मानं खलो यल्लभतेऽन्यतोऽपि।
तत्पाद्हीनोऽपि फणी जवेन
जले स्थलादभ्यधिकं प्रयाति॥

5 अन्यस्थानादपि विशिष्टं मानं निर्गुणोऽपि खलो राजकुले यल्लभते। राजानः खलमधिकं यन्मानयन्तीत्यर्थः। तत्क— —— इदं भवतीत्यध्याहर्तव्यम्। तेन वाक्यार्थरूपकमिदम्। इदं किमित्याह। पादरहितोऽपि सर्पः स्थलादधिकं जले— —ति यत्। निर्विघ्नस्यापि यत्सर्वत्र मानलाभस्तन्निष्पाद- 10 स्यापि सर्पस्य जलस्थलयोस्समानगमनम्॥

कवीरवाप्यापि मनोज्ञ ‑ ‑ ‑
(न्वा*)जा न यः पाति कुपण्डितेभ्यः।
उपेक्षते केलि (शुका*)नव(ध्यान्
क्रीडा*)बिडालैर्भुवि हन्यमानान्॥

15 यो राजा सरसकाव्यानपि कवीन्खलेभ्यो न रक्षति स क्रीडाबिडालैर्मार्यमाणक्रीडाशुकानवलिम्पति। खलैरवमानि- तानां कवीनामरक्षणं यत्तद्बिडालमार्यमाणशुकावलेप इति वाक्यार्थरूपकम्॥

* Supplied from the Com

दिक्पालतेजोमयमूर्तिभाजां
कवीन् जिघांसन्ति बुधाः पुरो यत् ।
राज्ञामिदं तद्वरुणोपदिष्टं
मात्स्यं प्रति न्यायमुपेक्षकत्वम् ॥

5 पण्डिता राज्ञामग्रे कवीन्यद्धन्तुमिच्छन्ति तदिदमुपेक्षकत्वं कविरक्षणावलेपो राज्ञां भवति । अत्र हेतुमाह । मात्स्यं न्यायं प्रतीति । मात्स्येन न्यायेनेत्यर्थः । महान्मत्स्यः सूक्ष्मं मत्स्यं गिलतीति मात्स्यो न्यायः । मात्स्ये न्याये कुतस्तेषां शक्तिरित्याह । दिक्पालानामिन्द्रादीनामष्टानां लोकपालानां तेजो 10 भजताम् । यदि राजानस्तथाविधास्तन्मात्स्यो न्यायः कथं तेभ्यो रोचते इत्याह । वरुणोपदिष्टमिति । राज्ञां हि वरुणांशोऽप्यस्ति । वरुणश्चापां पतिः । तृतीयार्थे इति प्रतिः कर्मप्रवचनीयः । अपेक्षकत्वमिति वा पाठः । तदिदं बुधैः कवीनां हननं कर्तृं । वरुणोपदिष्टमपेक्षकत्वं भवतीति यो(जनीयम्) — — । 15 — — — प्रवचनीयैश्चेति द्वितीया । अल्पज्ञा एव कवीञ्जिन्द

दृष्ट्वा कविं क्षणामुखैर्मुधान्य-
रसूयया किं विबुधैर्विधेयम् ।
यो विश्वरूपो विबुधेषु धुर्य-
20 स्स एव हेतुर्हि कविप्रथायाः ॥

कविं दृष्ट्वा मृषानुचिन्तयाऽसूयया मत्सरेण कालमुखैः

पण्डितैर्विश्वरूपादन्यैः किं कार्यम् । यदा कृष्णनामा आजय-
मेरवः पण्डितस्तदादिभिः पण्डितैर्मिथ्या मत्सरेण किं संपा-
द्यम् । आजयमेरवो यः पण्डितराजो विश्वरूपनामा स एव
कविरिति प्रथायाः कवीनां वा प्रथाया हेतुः । कविं शुक्रं
5 च दृष्ट्वा हरिप्रभृतिभिर्देवैर्मत्सरेण किं कार्यम् । विश्वरूपो
देवदेवो हि कविप्रसिद्धिहेतुः ॥

पण्डितानां स्तुतिद्वारेण निन्दामाह ।

संमानितैः क्षालयितुं कवीन्द्रैः
- - - - - - - - - - - - - - - - |
10 - - - - - - - - - - - - - - तेषा-
मृणस्य शुद्धौ विबुधास्त्वरन्ताम् ॥

क — — — — — — — — — — — — — — — राजानः कवीनामध-
मर्णा भवन्ति । संमानितैः संमाननैर्वृत्तिदानेने — — — — — —
— — — — — — — — णं शोधयितुं राज्ञामुचितम् । पण्डिता एव
15 राज्ञामृणशोधने त्वरन्ताम् । — — — — — — — — — — — —
मित्याह । तेषां कवीनां काव्यविद्वेषस्तन्मुखेन । अयमर्थः ।
पण्डिता राजविषये कवीनां काव्यं द्विषन्ति । ततः कवयो
राज्ञां काव्यं न कुर्वन्ति । इति ऋणशुद्धिर्जाता । पण्डिता
राज्ञां नाममात्रमपि विस्मारयितुं प्रवृत्ता इत्यर्थः । यदा
20 राजभिर्दत्तवृत्तयः कवयो राज्ञामधमर्णा भवन्ति । पण्डिताः

कवीनां – – – – – षयित्वा कवीनामृणशुद्धौ त्वरन्ताम्। काव्ये दूषिते सति राजानः कवीनां वृत्तिं ह – – – – – – – – – – – – – – तेत्यर्थः॥

कवेस्सतत्त्वं कविरेव वेद
5 न तद्विदस्तर्कवितर्कखिन्ना।
किं वेदितुं दोषगुणावभिज्ञ-
स्तुरङ्गविद्यानिपुणस्य यन्ता॥

कविरेव कवेः कौशल्यं जानाति तार्किकास्तु नात्र कुशलाः। अश्वविद्याचतुरस्य गुणदोषौ विप्रष्टुं यन्ता गजारोहः
10 किमभिज्ञो भवति॥

मत्सरिभिरनुपेक्षणीयमीश्वरविषयमेव काव्यं यतो न कृतं तत्प्रतिपादयितुमाह।

गतस्पृहोप्यादिकविः प्रबन्धं
बबन्ध रामस्य भविष्यतोऽपि।
15 संमान्यमानस्तु नरेश्वरेण
मादृक्कथं काव्यविधावुदास्ताम्॥

रामभद्रस्य जन्मनः प्रागेव रामायणं निस्पृहोऽपि वाल्मीकिः कृतवान्। मादृक् सस्पृहस्तु राज्ञादत्तवृत्तिश्चरित्रवर्णने काव्ये कथमुदासीनो भवेत्। संमान्यमान इति मनेर्णिजन्ताल्लटश्श-
20 हशानचाविति कर्मणि शानच्॥

मयि प्रवृत्ते हिमसोदराणि
यशांसि विस्तारयितुं नृपस्य।
प्रज्वलीतु प्रतिपक्षराज-
न्यायेन सर्वोऽपि गणो बुधानाम्॥

5 हिमसदृशानि राज्ञः पृथ्वीराजस्य यशांसि ख्यापयितुं मयि प्रवृत्ते सति तदीयप्रतिपक्षा राजानः पण्डिताश्च मत्सरेणात्यर्थं ज्वलन्तु। हिमेन ज्वलनमिति विरोधाभासः॥

यदि पण्डिता मत्सरं कुर्वन्ति तर्हि त्वत्काव्यं कः शृणोतीत्याह।

10 नरेश्वराणामुपमानतायै
कवीश्वराणामपि वर्णनाय।
जगाम यो राममयं शरीरं
श्रोता स एवास्तु हृदिस्थितो मे॥

योमे हृदिस्थितः पृथ्वीराजस्स एव श्रोताऽस्तु यः 15 श्रीरामरूपतां गतवान्। किमर्थम्। राज्ञामुपमानार्थं कवीनां च वर्णनार्थम्। यदि श्रीरामो नाजनिष्यत राज्ञामुपमानं को भविष्यत्कं वा कवयो वर्णयिष्यन्नित्यर्थः। श्रीराम एव पृथ्वीराजरूपो जात इति वक्ष्यति॥

स्ववंश्यभूपालयशःप्रताप
पाण्डुत्वचण्डत्वविवर्धनाय ।
यौ संघटेते प्रतिमासमध्ये
तौ वा मम प्रेक्षकतां भजेताम् ॥

5 अथवा तौ मदीयकाव्यस्य परीक्षकतां श्रूयताम् यौ मासस्य सावनमासस्य मध्ये दर्शे दर्शे यौ संघटेते एकराशिस्थौ भवतः । अत्र फलोत्प्रेक्षा । निजवंशजातानां राज्ञां यशः प्रतापयोः शुभ्रत्वतीव्रत्वयोर्वर्धनार्थमिव । अयमर्थः । स्ववंश्यपृथ्वीराजप्रेम्णा मत्काव्यं श्रोष्यतः । भजेतामिति——————————ट् ॥

10 बाल्येऽपि लीलाजिततारकाणि
गीर्वाणवाहिन्युपकारकाणि ।
जयन्ति सोमेश्वरनन्दनस्य
षसां गिरां शक्तिमतो यशांसि ॥

त्रिशक्तिसहितस्य सोमेश्वरनामराजात्मजस्य पृथ्वीराजस्य
15 बाल्येऽपि यशांसि जयन्ति सर्वोत्कर्षेण वर्तन्ते । षसां संस्कृतादीनां षट्संख्यानां वाचां । भाषाषट्कज्ञस्येत्यर्थः । लीलया हेलया जिततारकाण्युडुभ्योप्यतिशुभ्राणीत्यर्थः । अत एव गंगाया उपकारकाणि । अतिशुभ्रत्वापादनात् । शक्तिमतः कुमारस्य च । तत्पक्षे तारकोऽसुरविशेषः । गीर्वाणानां वाहिनी

सेना । सोम उमासहित - - - श्वरस्तत्पुत्रस्य । षसां गिरा-
मिति कुमारस्य षण्मुखत्वात् ॥

पुरा पुराणं पुरुषं प्रणम्य
कदाचिदाभोगितयोगनिद्राम् ।
5 व्यजिज्ञपन्नाभिसहस्रपद्म-
सिंहासनः प्राञ्जलिरब्जयोनिः ॥

आभोगवती कृता भोगिताऽनुभूता योगनिद्रा येन तं
हरिं प्रणम्य पुरा कस्मिन्नपि काले नाभिपद्मसंविष्टः ब्रह्मा
कृताञ्जलिरेवं विज्ञप्तवान् ॥

10 यथा त्वदीये मम पुष्करेऽस्मिन्
स्थितस्य संतापलवोऽपि नास्ति ।
तथा क्षितौ पुष्कर एव तीर्थे
त्वया सनाथस्सुखितो वसामि ॥

अस्मिंस्तन्नाभिपद्मे वसतो मम यथा संतापलेशो नास्ति तथा
15 त्वया कृतसानाथ्यो भूमावपि पुष्करे तीर्थे सुखेनाहं वसामि ॥

त्वं पुण्डरीकाक्ष इति प्रतीतो
बिभर्षि नाभावपि पुण्डरीकम् ।
यत्तच्च नित्यं कृतसंनिधान-
स्त्रिपुष्करं पुण्यमतस्तदाहुः ॥

20 यस्त्वं पुण्डरीकाक्ष इति पुष्कराक्ष इति प्रसिद्धः । तथा त्वं

नाभौ पुण्डरीकं पुष्करं यस्त्वं धारयसि स एवंविधस्त्वं तत्र प्रसिद्धे (पुष्करे ?) यत्कृतसंनिधानो भवसि नूनं ततो हेतोर्जनास्तत्पुष्करं त्रिपुष्करं कथयन्ति ॥

देवस्त्रिनेत्रोऽप्यजगन्धनामा
5 त्रिपुष्करे सन्निदधाति तस्मिन्।
जगत्त्रयीपावनता प्रवृत्तं
त्रिस्रोतसो दर्पमिवापनेतुम् ॥

तत्र त्रिपुष्करेऽजगन्धनामा देवस्सन्निधानं करोति। अत्र संभाव्यते। अहं त्रिभुवनं पवित्रीकरोमीति जातं गंगाया
10 दर्पं निवारयितुमिव ॥

सा यज्ञभूमिर्मम पूर्वमस्यां
कुण्डं त्रयं वह्निमयं यदासीत्।
तदेव कालस्य विपर्ययेण
पयोमयीं मूर्त्तिमभिप्रपन्नम् ॥

15 यत्त्रिपुष्करतीर्थं सा मम यज्ञभूमिः पूर्वमभूत्। अस्यां यज्ञभूमौ त्रयाणामग्नीनामाश्रयो यत्कुण्डत्रयं यदासीत्तदेव संप्रति कालवशाज्जलमयं संपन्नम्। वह्निमयमिति तत्प्रचुरे मयट्

लोके त्वदीये यदि वा मदीये
माहेश्वरे वा न तथा रमन्ते।
यथा त्रयाणामपि सन्निधाना-
दस्माकमस्मिन्नपवर्गकामाः॥

5 तव मम महेश्वरस्य च संबन्धिनि भुवने मुक्तिकामा न तथा तुष्यन्ति यथास्माकं त्रयाणां सन्निधानात्त्रिपुष्करे तुष्यन्ति मुक्तिकामाः। अस्माद्भुवनादप्यधिकं तूर्णमेवात्र मोक्षसिद्धिः॥

कैलासशैलादपि निर्मलानि
10 क्षीरोदधेरप्यमृतं स्रवन्ति।
(ममा?)लयाब्जादपि पुण्यगन्ध-
पद्मानि हि त्रीण्यपि पुष्कराणि॥

देवत्रय्यास्त्रिपुष्करसंनिधाने हेतुमाह। कैलासक्षीरसमुद्रनाभिपद्माधिकगुणानि त्रीणि पुष्कराणि हि भवन्ति॥

15 ब्रह्मर्षिगेहेषु सुखं स्थिताया-
स्सरस्वतीनेत्रतया त्रिवेद्याः।
शीता प्रमोदाम्बुसरस्त्रयी सा
स्वामिन्निहानेहसि तत्समास्ते॥

(ब्रह्मर्षी)णामाश्रमेषु सुखं वसन्त्या वेदत्रय्याः सरस्वती-

नेत्रभावेन तस्याः हर्षबाष्पसरस्वत्यौ शीतलस्वभावा हे स्वामिन्
संप्रति तप्तं संतापतयाऽऽस्ते स्थिता ॥

कलेर्बलात्पाशुपतास्त्रनीत्या
याते वृषे सांप्रतमेकपद्यम् ।
5 त्रिलोचनो वाहनदुस्थितत्त्वात्
त्रैलोक्ययात्राविमुखत्वमेति ॥

पाशुपतास्त्रवदस्य धर्मे कलिबलादेकपदे सम्पन्ने वृषवाहनो
भगवान् वृषस्य पददुस्थितत्वात्पादत्रयनाशात् त्रिभुवनयात्रा-
पराङ्मुखो भवति । प्रतीयमानोत्प्रेक्षेयम् ॥

10 त्वयापि कामं कलिकालरात्रौ
निद्राविधेयत्वमुपागतेन ।
केशान् घनान् गर्जितभीरुणेव
हित्वा स्थितं शान्ततया जिनत्वे ॥

त्वयापि सम्प्रति बुद्धावतारे गृहीते सति घनान् निवि-
15 डान् केशान् शिरोरुहान् कस्य जलस्येशान् स्वामिनो हित्वा
विलुञ्च्य शान्ततया स्थितम् । भावे क्तः । घनकेशवर्जने हेतू-
त्प्रेक्षामाह । गर्जिताद्भीतेनेव । यतः कलिकाल एव तमो-
मयत्वाद्रात्रिस्तस्यां निद्रायत्तेन । निद्रायत्तानां हि महान्
शब्द उद्वेगकरः ॥

कलावमुष्मिन्विरतोद्यमेषु
क्रतुक्रियायां द्विजमण्डलेषु।
भोगे हविर्भागमये समाप्ते
जातो भृशं मन्दबलस्सुरेन्द्रः॥

5 कलौ सति ब्राह्मणेषु यज्ञकर्मणि निवृत्तोद्योगेषु सत्सु हविर्भागेऽलब्धे सतीन्द्रोऽल्पबलस्सम्पन्नः॥

इज्याभिघातादभिभूयते भूः
कलावनावृष्टिमहाभयेन।
इत्युद्यमं पावकनन्दनस्य
10 निषेधति क्षीणमदो मयूरः॥

'अग्नौ प्रास्ताहुतिस्सम्यग्' इत्यादिस्मरणेन यज्ञाभावादनावृष्टिभयेन भूमिः परिभूयतेऽल्पफला क्रियते। तत एव निर्मदो मयूरः कुमारस्य लोकयात्रां निवर्तयति। मयूरा हि दिव्यजलजीवकाः॥

15 उत्तेजितं रामतया कुलं य-
दुद्वेजितं तद्भवता जिनत्वे।
इत्यन्वयं स्वं प्रतिसंदिहानो
मन्दप्रभस्सूरिरिवाद्य सूर्यः॥

श्रीरामरूपेण त्वया यत्कुलं शोभितं तदेव बुद्धरूपेण

सता त्वया च्चोभितमिति स्ववंशे ससन्देह इव रविरद्य मन्दप्रभो जातः । यथा सूरिः पण्डितोन्वयं संबन्धं प्रतिसन्देहवान् मन्दच्छायो भवति ॥

त्वया हरे तापसतामुपेत्य
5 सख्ये गृहीते हरिणैरिदानीम् ।
निवासभूमिर्मम पुष्करं त-
दास्कन्दि मातङ्गमहाभयेन ॥

हरिर्विष्णुस्सिंहश्च । हे हरे त्वया ऋषितामाश्रित्य मृगैः सह निवासे गृहीते सति मत्स्थानं पुष्करं मातङ्गेभ्यो म्लेच्छेभ्यो
10 महाभयेनास्कन्दि आक्रान्तम् । सिंहे च शान्तप्राये सति मातङ्गेभ्यो हस्तिभ्यो भयेन स्थानमास्कन्द्यते ॥

चक्रे जगत्सर्गमहाध्वरान्ते
मयापि यत्रावभृथाभिषेकः ।
तत्राधुना देवगृहाग्रहार-
15 हिंसाक्लमं म्लेच्छचमूश्छिनत्ति ॥

जगत्सर्ग एव महाध्वरस्तत्समाप्तौ यत्र स्थाने मयापि अवभृतस्नानं कृतं । शुद्ध्यर्थमिति शेषः । तत्राधुना म्लेच्छाः प्रासादादिध्वंसेन खेदं निवारयन्ति । तथाविधे पुण्यायतने म्लेच्छाः पापमाचरन्ति इत्यर्थः । अस्मत्कृतसर्गयज्ञसमाप्तावधिकारमलस्य
20 वारणार्थं योऽवभृथाभिषेको भवति सो - - - - - - - मया य - -

---- इत्यन्वयः । पुष्करसेवया ममाधिकारमलनिवृत्तिर्जाता नत्वन्यत्र तपो -- दि --वित्यर्थः ॥

तव प्रविष्टे प्रमदाश्रुधारे
प्राक्तत्र रेवायमुनास्वसारौ ।
5 वेविश्यतेऽवश्यमुपात्तभाजा-
मुच्छिष्टमप्यद्य जनङ्गमानाम् ॥

तवानन्दबाष्पधारे पूर्वं तत्र प्रविष्टे । पुष्करस्य पुण्यायतनत्वादानन्दोत्पत्तेरिति भावः । भगवतश्चन्द्रार्कनेत्रत्वाद्धर्षबाष्पधारे रेवायमुनयोः सोदर्यौ । रेवा यमुने हि चन्द्रार्काभ्या-
10 मुत्पन्ने । अद्य तु जनङ्गमानां म्लेच्छानां तत्समीपवर्त्तिनामुच्छिष्टमपि पुनः पुनः प्रविशति ॥

या स्नास्यदेकादशरुद्रमुण्ड
प्रणामकाले नयनाग्निनाभूत् ।
मातङ्गबन्दीकृतविप्रबाष्पैः
15 कोष्णाद्य सा पुष्करकूललेखा ॥

स्नास्यन्तो य एकादश रुद्रास्तत्कर्तृके मुण्डप्रणामे या तन्नेत्राग्निना कोष्णाभूत् साद्य म्लेच्छावष्टब्धब्राह्मणाश्रुभिः पुष्करतटभूमिः कोष्णा भवति ॥

तां यत्र तत्तत्त्रिदिवेशवेश्यां
20 स्नातीं शचीं स्वर्गणिकागणः प्राक् ।

स्नानान्निषिद्धो निभृतं जहास
मज्जन्ति तत्राधमपुष्पवत्यः ॥

यत्र पुष्करे स्नातुं प्रवृत्तः स्वर्गवेश्यासमूहः पूर्वं शच्यैव निषिद्धः । तासां वेश्यात्वेनाधमत्वादिति भावः । तत्र स्नातुं प्रवृत्तां शचीं हसितवान् । अत्र हेतुः । तेषां तेषां त्रिदिवेशानामिन्द्राणां वेश्यामुपभोग्याम् । तत्राधमानां म्लेच्छानां पुष्पवत्य ऋतुस्नाताः स्त्रियः स्नान्ति । शचीगात्रस्पर्शनमात्रमपि यत्रानुचितं तत्र रजस्वलास्तुरुष्क्यः स्नान्ति ॥

मरुप्रयाणक्रमखिन्नभिन्न-
स्ववाहकण्ठासृगनस्ततृष्णाः ।
पिबन्ति तानद्य पयांसि पापाः
सुधान्धसामाचमनोचितानि ॥

मरौ धावनजातेन कष्टेन खिन्ना अत एव भिन्नेभ्यः क्षतरक्तवाहिनाडीव्यधेभ्यः स्ववाजिकण्ठेभ्योऽसृजा रक्तेनानस्ता अनपेता तृष्णा येषां ते पापाः । सुधान्धसाममृताशिनामपि शोधनयोग्यानि, पेयानि वा, तानि जलान्यद्य पिबन्ति ॥

सप्तर्षयः कामदुघापयोभिः
प्रारेभिरे प्राक्परमान्नपाकम् ।
हत्वाधुना जीवत एव मत्स्यान्
पचन्ति पुण्ये पुलिने पुलिन्दाः ॥

कामधेनुचौरैर्हेतुभिः सत्यर्षयः पायसपाकं यत्र प्रारब्धवन्तस्तत्राद्य तत्तटे पवित्रेपि मीनानुद्धृत्य किराता जीवत एव पचन्ति॥

सुतः पुरस्ताद्ध्रुवतानिमित्त-
5 मुत्तानपादस्य तपस्यति स्म।
अवीचयः पुष्करतोद्य पापैः
पापैकनिष्ठैः सुगमीक्रियन्ते॥

यत्रैवोत्तानपादपुत्रो ध्रुवतां प्राप्तुं तपः कृतवांस्तत्रैव पापैकनिष्ठैः पापैर्म्लेच्छैरद्य पुष्करेऽवीचयो नरकविशेषाः सुलभाः क्रियन्ते॥

10 इत आरभ्य दिशतीत्यन्तं (p. 32 l 5) पुष्करस्तुतिकुलकम्।

व्यधादहल्यागमनाघशुद्धिं
यतो निविश्याम्बुजनालवाले।
इन्द्रोस्य तीर्थस्य ततः प्रभावा-
न्नेत्राण्यवापाम्बुजसोदराणि॥

15 अस्मिंस्तीर्थे पद्मनालतन्तौ निवेश्येन्द्रोऽहल्याभोगपापनिवृत्तये तपो यद्व्यधात्तत इन्द्रोस्य तीर्थस्य प्रभावात्पद्मसमानि नेत्राणि लेभे। गौतमशप्तः शक्रः शरीरे रन्ध्रदशशतीं प्रापत्। अस्य तीर्थस्य प्रभावादत्र तपः कुर्वतः शक्रस्य नेत्रसहस्रं संपन्नमिति श्रुतिः। संभाविताद्घशोधनादधिकस्य
20 रन्ध्राणां नेत्रीभावस्य संपत्तिरिति विशेषः॥

सप्तर्षिदारान्प्रति दुर्विकल्पे
तीर्थं कृशानोरघमर्षणं तत्।
यमेन यस्यां च पयस्तदीय-
माचम्य पापं विनियम्यते स्म॥

5 अग्नेः सप्तर्षिदारान् प्रत्यभिलाषोभूत्। ततः स्वभार्यां सप्तर्षिदाररूपं कारयित्वाऽरंस्तेति दुर्विकल्पे सति अग्नेस्तत्तीर्थ-मघमर्षणम्। तत एव पापशुद्धिर्जातेत्यर्थः। यमस्य भगिन्या-मभिलाषोभूदिति यस्यां पापं यमेन तज्जलमाचम्य निवारितम्॥

स्नात्वा जले तत्र दिगीश्वरत्वे
10 योग्येन रक्षःपतिनापि जातम्।
क्षारेण किं वारिधिनेति वेद
तदेव सर्वस्वमिति प्रचेताः॥

तत्रैव स्नात्वा महाराक्षसेनापि नैर्ऋतेन दिक्पालत्वे योग्येन जातम्। भावे क्तः। क्षारेणाब्धिना किं फलमित्यतो वरुणोपि
15 तदेव तीर्थं सर्वस्वं जानाति। समुद्रादपीदं पवित्रमित्यर्थः॥

तत्पावनं पावकतोपि मत्वा
नभस्वता किङ्करता गृहीता।
मरुस्थलीभ्यो मृगतृष्णिकाभ्यो
न तन्मृगस्तत्सलिलं जहाति॥

वायुरग्नेः सखेति प्रसिद्धिः। अग्नेरपि सकाशात्पवित्रं तत्तीर्थं मत्वा तस्य तीर्थस्य वायुना किङ्करता गृहीता। वायुर्दासवत्तत्र वसतीत्यर्थः। मरुस्थलीभ्यो मृगतृष्णिकयाभ्रस्तन्मृगः पुष्करतटं न जहाति। इत्युत्प्रेक्षा। अंधश्चैकत्रैवावतिष्ठते॥

5 तटात्तटं मन्द्रमटाध्यमानं
मत्वा ककुद्मन्तमुमापतेस्तत्।
स्वार्थं च पुण्यं च विदन्नुपास्ते
धराधिपो लिप्सितजातरूपः॥

हरस्य वृषभं तटान्तरेषु शनैः कुटिलतया भ्रमन्तं मत्वा स्वार्थं
10 च पुण्यं च तदुपासनेन मन्यमानो वैश्रवणस्तत्तीर्थं सेवते। यतो लिप्सितानि लब्धुमिष्टानि जातरूपाणि जातमभिजातं च येन सः। हरवृषस्य संचारेण जातरूपाणि जायन्ते इति प्रसिद्धिः॥

रुद्रेषु मूर्धस्थसुरापगेषु
त्रिपुष्करे सन्निहितेषु जाने।
15 चतुर्दशभ्यो भुवनेभ्य एव
पवित्रता संघटिता तदानीम्॥

शिरस्थितगङ्गेष्वेकादशसु रुद्रेषु त्रिपुष्करतटकृतसंनिधानेषु सत्सु अहं जाने भूमौ चतुर्दशभ्यो भुवनेभ्यः पवित्रता तत्र राशीभूता। अन्यथा तत्रैव रुद्राः किं वसेयुः। एकादश रुद्राः
20 पुष्कराणि त्रीणि च चतुर्दश भवन्तीत्यर्थच्छाया॥

तथा शिरोजातपदैर्न शम्भोः
कामंडलव्यैर्न तथा ममापि ।
अवैषि पाद्यैर्न निजैस्तथोर्वीं
यथा पवित्रामसि(?पि)पुष्करैस्तैः ॥

5　शम्भोः शिरसि जातपदैः स्थिरस्थितैः पुष्करैर्जलैः गाङ्गै-
रित्यर्थः । मम कामंडलव्यैः कमंडलुस्थितैर्गाङ्गैरित्यर्थः । त्वमपि
भूमिं पवित्रां तथा निजैः पाद्यैः पुष्करैर्गाङ्गैर्न जानासि यथा
तैस्त्रिपुष्करैर्जानासि । गङ्गातोपि पुष्कर पवित्रमित्यर्थः ।

पुष्करं करिहस्ताग्रे वाद्यभाण्डे मुखे जले ।
10　व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ॥ इत्यमरः ॥

तापत्रयं दर्शनतो दहन्ति
मलत्रयं स्पर्शनतो नुदन्ति ।
सन्ध्यात्रयं वन्दनतो जयन्ति
स्रोतस्त्रयं विस्मरयन्ति गाङ्गम् ॥

15　अध्यात्मिकाधिदैविकाधिभौतिकरूपं तापत्रयं दर्शनेन
त्रीणि पुष्कराणि दहन्ति । तथाणवमायीयकार्मरूपं मलत्रयं
स्पर्शनेन निवारयन्ति । तथा (वन्दो)नेन सन्ध्यात्रयवन्दना-
दधिकं फलं दिशन्ति । तथा त एव गङ्गां प्रवाहत्रितयं
जयन्ति ॥ गर्भकुलकम् ॥

20　उपासते मां त्रिदिवस्पृशोपि
यदर्थमेव त्रिदिशस्त्रिसन्ध्यम् ।

त्रिविक्रम त्रीणि पदानि विष्णो-
स्तवं प्रवृत्तानि यतस्त्रिलोक्याम् ॥

यदर्थं मोक्षप्राप्त्यर्थं स्वर्गस्थिता देवा अपि मां नित्य सेवन्ते। तथा हे त्रिविक्रम, विष्णोर्विश्वव्यापकतां कुर्वतस्तव 5 त्रीणि पदानि यतः प्रभावात्त्रिलोकव्यापीनि संपन्नानि ॥

त्र्यक्षस्त्रिशूलस्य शिखात्रयेपि
त्रिविष्टपं येन तृणाय मत्वा।
त्रिशङ्कुदिङ्नाथमुषां बभूव
पुराणि च त्रीणि तृणीचकार ॥

10 त्रिशूलस्य धारात्रये सत्यपि येनैव महिम्ना स्वर्गं तृणायेव मत्वा। अयमर्थः। अन्युत्कर्षात्पुनरपि स्वर्गं प्र(?सा)दयामी-तीश्वरो मतवान्। धर्माधर्मविवेचकत्वेन स्वर्गस्य रचितार त्रिशङ्कुदिशो दक्षिणाशाया नाथं स्वामिनं धर्मराजमुषां बभूव। स्वर्ग------दाह्यतेऽतस्स्वर्गस्यापि दाहः प्रसज्यते। 15 तस्यापि दाहोस्तु किं तेनेति त्रिपुराणि चाधाक्षीत्। उषां बभूवेति गुणाभावश्चिन्त्यः ॥

किं भूयसा त्रीनुदयानवाप्य
शक्तीश्च सिद्धीश्च समेत्य तिस्रः।
संगृह्य मित्रत्रितयं निगृह्या-
20 मित्रत्रयं चोज्ज्वलितप्रयत्नाः ॥

त्रिकूटशैलावधि सिद्धयात्राः
क्ष्मापास्त्रयं राजचतुष्टयानाम् ।
त्रिधा त्रिखंडामपि मेदिनीं च
जित्वा यदासादयितुं न योग्याः ॥
5 दिशन्ति तत्तीर्थ्यपि पुष्कराणि
संदर्शनस्पर्शनसंनिधानैः ।
युगत्रयीपर्यवसानकाले
दुःखैस्त्रिभिः संप्रति दूषितानि ॥

भूयसा किं भवति । बहुनोक्तेन किमित्यर्थः । आत्मोदया-
10 दीँस्त्रीनुदयान् प्रभुशक्त्यादीँस्तिस्रः शक्तीर्भूमिसिद्ध्यादीँस्तिस्रः
सिद्धीर्मित्रत्रितयं मित्र,मित्रमित्रा,ऽधिमित्राणि प्राप्य तथा
रिपुं, रिपुमित्रं, रिपुमित्रमित्रं च जित्वा लब्धधर्मार्थकामाः ॥
त्रिकूटाद्रिपर्यन्तं जयन्तो राजानो राजचतुष्टयानां त्रयं
द्वादशविधं राजचक्रं जित्वा तथा त्रिखडां भुवं च जित्वा
15 यत् प्राप्तुं न योग्याः ॥ तद्दर्शनादिभिर्ददानानि त्रिपुष्कराणि
कलिकालेच त्रिभिर्दुःखैराध्यात्मिकादिभिर्दूषितानि ॥

प्राप्तं न दिङ्नागकरस्थितेन
वाग्देवताश्रीकरवर्त्तिना वा
संबधिना वार्णवसप्तकस्य
20 यत्सप्तसप्तेरपि वर्त्मना वा ।

यद्वादनीयेन महानटस्य
नाट्यक्षणे नंदिमुखैर्गणैर्वा ।
यत्तिष्ठता वा तव नन्दकेस्मिन्
मेघेऽसुरस्त्रीस्मितचंद्रिकायाः ॥
तीर्थेन तत् कस्य न पुष्कराक्ष
त्रिधा युगेषु त्रिषु पुष्करेण ।
बभूव चिन्तामणिकामधेनु-
कल्पद्रुमप्राग्रहरेण साम्यम् ॥ तिलकम् ॥

हे पुष्कराक्ष, दिङ्नागानां करस्थेन पुष्करेण, वाग्देवतायाः
10 श्रियश्च करवर्त्तिना वा पुष्करेण पद्मेन, सप्तसमुद्राणां पुष्करेण
जलेन, सप्तसप्ते रवेर्वर्त्मना पुष्करेणाकाशेन, ॥ महानटेश्वरस्य
नाट्यकाले नंदिमुखैर्वादनीयेन पुष्करेण मुरजेन, तथा दैत्य-
स्त्रीहासज्योत्स्नाया मेघे निवारके इत्यर्थः । तवाऽस्मिन्नन्दकाख्ये
खड्गे तिष्ठता पुष्करेणाग्रेण च यन्न प्राप्तम् ॥ तत्त्रिषु युगेषु
15 चिन्तारत्नादिभ्यः श्रेष्ठेन त्रिपुष्करेण साम्यं कस्य न बभूव ॥

स्वयं पयोधिं विरसं विदित्वा
त्वं पुंडरीकाक्ष तदध्यतिष्ठः ।
शयालुतायास्तदयं न कालो
दयालुता सा समयानुयाता ॥

20 हे पुंडरीकाक्ष समुद्रं क्षारं मत्वेव त्वं स्वयमप्रार्थित एव
तत्पुष्करमाश्रयेः । ततस्तव नायमवलेपावसरः । तव करुणोचिता ॥

उत्तिष्ठमाने त्वयि माननीय
शंकास्पदं कस्य कलिर्वराकः ।
न हि त्रिलोकीभयभंजनार्थं
तवोद्यमे द्वापरमप्यवैमि ॥

5 हे माननीय त्वय्युत्तिष्ठमाने गृहीतोद्यमे सति वराकः कलियुगं कलहश्च कस्य शंकास्थानं। न कश्चित्कलेः शंकते इत्यर्थः। अत्र हेतुः। त्रिजगद्भीतिहरणार्थे तवोद्योगे द्वापरं युगं संदेहं च न मन्ये। प्रतिमल्लाभावादितिभावः। यत्र द्वापराभाव स्तत्र कथं कलिरित्युक्तिसंगतिः॥ संदेहद्वापरौ चार्थेत्यमरः॥

10 व्याहृत्य वाक्यमिति पुष्करकारणेन
तूष्णीमभूयत च पुष्करकारणेन ।
आसर्गसंमतपिशाचजनार्दनस्य
भास्वत्यपत्यत दृशा च जनार्दनस्य ॥

पुष्करकारणेन पद्मजन्मना त्रिपुष्करहेतोर्वचनमुक्त्वा तूष्णीं
15 भूतं च जनार्दनस्य दृशा सूर्ये पतितं च। द्वौ चशब्दावेककालतां सूचयतः। यतः सर्गादारभ्य संमतं पिशाचजनानामर्दनं मारणं यस्य ॥

तत्कालं रविमण्डलात्पुनरिव त्वष्टुर्गताङ्गोचरम्
दैत्यारेर्विषयीकृताद् रविमयेनैवेक्षणेनोदगात् ।

गाढाकृष्टनभोवरोहसमयन्यञ्चन्मुखाश्वावली-
वल्गाहि त्रुटितापतत्फणमणिज्योतिस्सपत्नं महः ॥

विष्णो रविमयेन नेत्रेण स्थानीकृतान्नारायणेन दक्षिण-
दृशावीक्षितादित्यर्थः । सूर्यमण्डलात्तदा तेज उदगान्निर्गतम् ।
5 अतस्संभाव्यते । विश्वकर्मणो गोचरमिव गतात् । विश्वकर्मणा
हि पूर्वं तक्षितात्सूर्यात्तेजः पतितम् । गाढमाकृष्टाच्च तेन नभसो-
वरोहसमये न्यञ्चन्मुखाया अश्वश्रेणेर्वल्गाभूता येऽहयस्तेभ्यस्त्रुटिता
अत एवापतन्तो ये फणमणयः तेषां तेजसः सपत्नं समम् ॥

आकालाग्नेः शिवान्तं प्रथममजनि यत्तद्विपर्यासवृत्त्या
10 संप्रत्याग्नेयलिङ्गं किमिदमवतरत्यन्यथेयत् क्व तेजः ।
इत्यन्तः कान्तिजातं कमलजकमलाकान्तमेलापवेला-
साक्षित्वेन स्थितानां किमपि दिविषदां विस्मयं
तद्वितेने ॥

तत्कान्तिजातं स तेजःपुञ्जो नभश्चराणामाश्चर्यमुदपादयत् ।
कदाचित्तैः कश्चित्तेजःपुञ्जो न दृष्ट इत्याह । कमलजो ब्रह्मा
15 कमलाकान्तो विष्णुस्तयोः संघटनदर्शिनाम् । यदा तयोः संघटनं
पश्यतामिति वस्तुधर्मः । इति हेतोः कालाग्नेरारभ्य शिवपर्यन्तं
पूर्वं यदजनि । विपर्यासवृत्त्या आकाशादधः प्रवृत्त्या तदाग्नेय-
लिङ्गमिदं किमवतरति । कि---तम् । अन्यथा यदीद-
माग्नेयलिङ्गं न भवति तदा इयत्तेजः क्व भवतीति भद्रम् ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणं व्यधिताद्यसर्गे ।
आज्ञामवाप्य विदुषां किल जोनराजः
पृथ्वीमहेन्द्रविजयाभिधकाव्यराजे ॥ १

इति पृथ्वीराजविजये प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ॥



अथांशुभिः सूर्यमयस्य चक्षुषः
स सूर्यकान्तादिव सूर्यमण्डलात् ।
जवादवारोहदखण्डचण्डिमा
वसुन्धरासंमुखमर्चिषां चयः ॥ १ ॥

5 अथानन्तरं सूर्यसहितस्य नेत्रस्य रश्मिभिः करणभूतैः इवातितीक्ष्णः सूर्यबिम्बाज्जवेन ज्वालापुञ्जो भुवमवतीर्णवान् । यथार्कांशुभिः सूर्यकान्तादवरोहति निष्क्रामति ॥ १ ॥

किमाहुतीः काञ्चन शातमन्यवी-
र्निवेश्य बिम्बे द्युमणेर्हुताशनः ।
10 समिद्धमूर्त्तिः सुहृदाऽन्तरिक्षतो
निवृत्य भूयोप्यधितिष्ठति क्षितिम् ॥ २ ॥

शातमन्यवीरिन्द्रार्थं प्रकल्पिताः काञ्चनाहुतीः सूर्यबिंबे प्रापय्य । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठत' इति वाक्यार्थात् । सुहृदा वायुना समिद्धमूर्त्तिर्दीपितज्वालोयमग्निः
15 किमाकाशान्निवृत्य भूयोपि भूमिमवरोहति ॥ २ ॥

किमेष रत्नाकर एव मूर्त्तिमा-
ननेन किं वा प्रहितः स वाडवः ।

सुरापगातिप्रणयप्रकोपवत्-
पतङ्गकन्यानुनयार्थमागतः ॥ ३ ॥

अयं मूर्त्तो रत्नाकर एव किं भवति। तथाऽनेन नदीपतिना गङ्गानुरागक्रुध्यद्यमुनानुनयार्थं विसृष्टः सन्नागतो वाडवः किं
5 भवति। पतंगकन्येति साभिप्रायम् ॥ ३ ॥

सुषुम्णनाम्नः किरणस्य चन्द्रमाः
प्रयाति यस्य प्रतिदर्शमर्थिताम् ।
तमेव सर्वं रविणा किमर्पितं
प्रदर्शयिष्यत्ययमोषधीः प्रति ॥ ४ ॥

10 यस्य सुषुम्णनाम्नः किरणस्य प्रत्यामावास्यां चन्द्रो याचकत्वमेति तमेव सुषुम्णमशेषमोषधीः प्रत्यर्केण किं दत्तमयमोषधीपतिर्दर्शयिष्यति । संभावनायां लृट् ॥ ४ ॥

किमुत्तरस्यां दिशि वृद्धतेजसा
कृतोपचारो वसुभिर्विवस्वता ।
15 उपेत्य रंभाप्रणयात्त्रिविष्टपं
व्रजत्यसावुत्तरदिक्पतेः सुतः ॥ ५ ॥

उत्तरदिक्पतेः सुतो नडकूबरो रम्भानुरागाद्दिवमागत्य किं व्यावर्त्तते । दीप्तत्वे हेतुमाह । वसुभिस्तेजोभिर्धनैश्च सूर्येण कृतमानः । तस्य मानने हेतुमाह । उत्तरस्यां दिशि प्रवर्धमानतेजसा ॥ ५ ॥

किमेष सत्यप्यमृतांशुसौहृदे
तिरस्कृतश्चन्द्रकिरीटतेजसा ।
विरागतः सूचितमित्रसंग्रहो
जगज्जिगीषुर्मदनोऽवरोहति ॥ ६ ॥

5 जगज्जेतुं किं कामोवरोहति । कुतोस्येयती दीप्तिरित्याह । कृतो मित्राणां मित्रस्यार्कस्य च संग्रहो येन । कुतो, विरागतो वैराग्यात् । कुतोस्य वैराग्यं जातमित्याह । चन्द्रेण कामस्य सुहृद्भावे सत्यपि शशिशेखरेण भस्मीकृतः । अयमर्थः । यदि मम चन्द्रो मित्रं स्यात्तन्मद्दाहोद्यतं हरमेष निवर्तयेदिति 10 वैराग्यान्मित्रस्य रवेः संग्रहं कृत्वा कामो भूमिमवतीर्णः ॥ ६ ॥

किमोषधीशस्य सहोदरो भिष-
क्कृतोपदेशश्चिरकालमश्विनोः ।
अनामयीकर्त्तुमदः क्षमातलं
त्विषां निधेर्मण्डलमेष मुंचति ॥ ७ ॥

15 ओषधीशस्य चन्द्रस्य सहोदरो भिषग् धन्वन्तरिरिदं भूतलमरोगं कर्त्तुं सूर्यस्य मण्डलं किं मुंचति । स्वर्गे धन्वन्तरिः किं स्थितवानित्याह । चिरकालमश्विनोः कृतोपदेशः । ओषधीशस्य सहोदरो भिषगिति साभिप्रायम् ॥ ७ ॥

किमेष राशिस्थितिमेत्य भास्वता
20 वितीर्णदोषोपशमार्थवैभवः ।

उपप्लवं म्लेच्छकृतं महीसुतः
स्वभातुरंकं विनिहन्तुमागतः ॥ ८ ॥

महीसुतो भौमः म्लेच्छैःकृतमुपद्रवं निवारयितुं स्वमातु-
र्भूमेरङ्कं किमागतः। स कथमुपद्रवं निवारयतीत्याह। एकस्मि-
5 न्मेषादौ राशौ स्थितिमेत्य सूर्येण वितीर्णो दोषोपशमार्थं
वैभवो यस्य। रविर्हि दोषोपशमं रात्रिनाशं करोति ॥ ८ ॥

अनूरुणाज्जातिरिति प्रवेशितो
निराकरिष्यंस्तिमिरं रमातलात्।
गृहीतशिक्षः किमयं दिवाकरा-
10 द्दुरामनन्तः पुनरेति रक्षितुम् ॥ ९ ॥

किमयमनन्तः शेषोऽर्कमण्डलात्पुनर्भुवमेति रक्षितुं वोढु-
मित्यर्थः। भूतलादन्धकारं निवारयितुं। तत्रोपायमाह। सूर्या-
दधीतान्धकारहरणशिक्षः। अर्केण कुतो हेतोः सोऽध्यापित
इत्याह। अरुणेन मातृस्वसेयत्वात् प्रवेशितः। अथ ----
15 धारितां भूमिं भूयो रक्षितुं -------- चेत्यन्वयः ॥ ९ ॥

सहस्रपादेन निकामसेवया
कृतप्रसादो द्वितयेन पादयोः।
किमेष पापाकुलितं नु पुष्करं
पवित्रयिष्यन्नरुणोवरोहति ॥ १० ॥

20 सहस्र ------------ द्वितयेन कृतप्रसादो

दत्तपादद्वयः । सूर्यस्य सहस्रपादत्वात् पदद्वयदानोक्तिसङ्गतिः । एषोऽरुणः किं नु म्लेच्छक्षोभितं पुष्करं पवित्रीकर्त्तुमवरूढः ॥१०॥

चिराय नारायणपादसेवया
किमुज्झितः पाशवपाशवैकृतैः ।
5 भवान्तरे शिक्षितराक्षसक्षयो
ऽन्यरूपतामेत्ययमर्कभूर्हरिः ॥ ११ ॥

श्रीरामपादसेवया त्यक्तपशुजन्मपाशविकारो जन्मान्तरे शिक्षितराक्षसवधोऽयम - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - ॥ ११ ॥

10 जनेन कानीनतया कदर्थितः
प्रविश्य युद्धक्रियया‌ऽर्कमंडलम् ।
अयोनिजन्मत्वसमेधितद्युतिः
किमेष कर्णः पुनरेति भूतलम् ॥ १२ ॥

— — — — — — — — — — ततो युद्धे मरणेनार्क-
15 मंडलं प्रविश्य किमेष कर्णो भूतलमेति । कर्णः कथमियद्दीप्त इत्याह । अयोनिजत्वेन समेधिता द्युतिर्यस्य ॥ १२ ॥

जगत्प्रदीपादपरः प्रदीपितो
जगत्प्रदीपो नु किमीश्वरेच्छया ।

किमेष वा द्वादशसूर्यतेजसा
कृतो भुवि द्वादशराजजित्वरः ॥ १३ ॥

जगत्प्रदीपादर्कादीश्वरेच्छया प्रदीपितो द्वितीयो जगत्प्र-
दीपः सूर्यः किमेष भवति। किंवा द्वादशानां सूर्याणां तेजसा
5 कृतः किमेष भवति । द्वादशविधराजजैत्र इति हेतुः ॥ १३ ॥

इति प्रतापायतनेन तेजसा
नभश्चराणां निचयेन चर्चितः ।
जगत्त्रयीपुण्यसमृद्धिसंगमः
पतंगमध्यात्पुरुषो विनिर्ययौ ॥ १४ ॥

10 इति प्रतापमूलस्थानेन तेजसा हेतुना एवं देवगणेन चर्चितः
कृतकल्पनः त्रिभुवनपुण्यराशिः पुरुषोऽर्कमण्डलान्निर्गतः ॥१४॥

इतः प्रभृति 'स योपि रेवन्द' (Verse 34, below.) इत्यन्तं
पुरुषरूपवर्णनपरं कुलकम् ।

यथा द्युसिन्धोः सलिलाद्यथाग्नित-
15 स्तथैव पुण्यादपि भानुमण्डलात् ।
महेश्वरस्यैष* तनोः समुद्गतो
जगद्द्विषां संहृतये गुहः पुनः ॥ १५ ॥

आग्नेयो गांगेयश्च कुमार इत्यागमः । अतः कविरूहति ।
अष्टमूर्त्तिमूर्त्त्यन्तराद्गङ्गाजलात्तथाग्नेर्यथा कुमारः समुद्गतस्तथैव

* महेश्वरस्येव, a variant noted on the margin.

पवित्रादृष्टमूर्त्तिमूर्त्त्यन्तरात्सूर्यमण्डलाच्छत्रुजयार्थमेष कुमार इव निर्गत इत्युत्प्रेक्षा । पुरुषो विषयो गुह्यो विषयी । विषयित्वेन विषयस्य संभावनार्थं महातेजस्त्वं — — — — — — — — स्समानो धर्मः ॥ १५ ॥

5 स्वभावसि — — — — — —
प्रभावलीलावगतावकाशया ।
शनैर्जनन्या प्रतिमान्यतावशा-
न्निषिद्धयेव स्वयमेव नान्वितः ॥ १६ ॥

देवानां छाया न भवतीति प्रसिद्धिः । तदेव कविरुत्प्रेक्षा-
10 पूर्वमुपन्यस्यति । शनैर्जनन्या च्छायया नान्वितः । छायाया अभावे हेतुं संभावयति । नैसर्गिकभूषणद्री — — — — — — —
— — — — — — — — — — — — — — द्धेति भावः ॥ १६ ॥

पतंगवानायुजरोमकोमलै-
र्निकामकान्तैरसिकुन्तलोत्करैः ।
15 गुणाननुज्झद्भिरिवान्वयाश्रया-
न्विनिर्ममाणो रजनीपराभवम् ॥ १७ ॥

पतङ्गस्य रवेर्वानायुजा येऽश्वास्तद्रोमवत्कोमलैरत्यर्थमेचकैः केशै रात्रेरप्यवमानं कुर्वन् । अत उत्प्रेक्ष्यते । कारणानुगुणान् गुणानत्यजद्भिरिवेति । तेषां कारणं दिवार्कमंडलो-
20 त्थितः पुरुषः ॥ १७ ॥

अनूरुकान्त्येव दधद्विनिर्मित-

सरोजलक्ष्म्या सितरक्तया रवे-
रयं कुले रत्नमितीव चुंबितम् ॥ २३ ॥

5 अरुणांशुभिरिव कृतं स्मितकान्तिच्छुरितमधरं दधत् । अत्रो-
त्प्रेक्ष्यते । अयं पुरुषः सूर्यवंशे रत्नभूत इत्यतो हेतोरिव पद्मिन्या
शुभ्रारुणया लक्ष्म्या चुम्बितम् । माता हि पुत्रं चुम्बति ॥ २३ ॥

विनिर्मितेनेव तमोभिराहृतै-
र्विवस्वताऽन्धङ्करणैर्जगद्द्रुहाम् ।
10 विराजमानः सहजेन वर्मणा
नवांबुदेनेव नभोग्रसंगिना ॥ २४ ॥

जगद्द्रुहां दैत्यानामन्धंकरणैरान्ध्यकरैः सद्भिस्तमोभिः
करणभूतैरादित्येनानीतैः कृतेन कवचेन शोभमानः । तत्कवच-
दर्शनाद्धि दैत्यानां तमांसि दर्पा गलन्ति । नभोग्रात्सङ्गिना
15 मेघेनेति संभावनम् ॥ २४ ॥

विशन्निशाकान्तकलासुधालवैः
कलिन्दकन्याजलशेषशुक्तिषु ।
च्युतैरिवोत्पन्नमिनस्य मण्डले
मनोरमं मौक्तिकदाम धारयन् ॥ २५ ॥

20 यमुनाजलान्निर्गताद्यच्छेषं तदेव शुक्तयस्तासु पतितैः

प्रविशच्चन्द्रकलामृतकणैरर्कमण्डले उत्पन्नमिव मुक्ताहारं हारिणं धारयन् ॥ २५ ॥

सुरद्विषां विघ्नयितुं मनीषितं
गृहीतमभ्यर्थ्य रवेरिवान्तिकात् ॥
5 उदारगारुत्मतनायकच्छलात्
समुद्वहन्नङ्कतले शनैश्चरम् ॥ २६ ॥

दीप्तगारुडमध्यमणिव्याजादुत्संगे शनैश्चरमिव दधत्। कुतः प्राप्त इत्याह। रविसमीपाद्याचित्वा गृहीतमिव। याचने हेतुमाह। दैत्यानामभिप्रायं हन्तुम्। शनैश्चरो हि सेवितः
10 शत्रून् हन्ति ॥ २६ ॥

किरीटकेयूरयुगाङ्गदद्वयी-
वतंसरत्नप्रतिबिम्बितामरः।
सुतान् विधातुर्दधदर्यमार्पिता-
न्न वालखिल्यानिव नानुयाचिकान् ॥ २७ ॥

15 किरीटकेयूरयुगे चाङ्गदद्वय्यां च यानि वतंसभूतानि रत्नानि तेषु प्रतिबिम्बिता अमरा यस्य सः। अतः संभाव्यते। अनुयाचिकाननुगमनोद्यतान् ब्रह्मात्मजान् वालखिल्यानिव न न दधदपि तु दधानः। वालखिल्याः केन हेतुना तं सेवन्ते इत्याह। अर्यम्णा दत्तान्। तेषां सूर्यविधेयत्वादिति भावः ॥ २७ ॥

प्रदी (? प्ततेजो) रविमण्डलान्तरा-
दवाप्तकन्दारविधेयकर्मणि ।
कलिन्दकन्यासलिलानुजन्मना
स्वकीर्तिगङ्गासहवासिनासिना ॥ २८ ॥

5 कन्दारं प्राणं ----लादिर्य --- विधेयं कर्त्तुं -----
प्राप्तप्राणघर्षणेनेत्यर्थः । यमुनानुजन्मना यामुनसोदरेण स ---
--- स्वकीर्त्तिगङ्गायाः सहवानिव खड्गेन भ्राजमानः ॥ २८ ॥

न चक्रमेकं भवति प्रयो — —
— — — — — वाजिभिः ।
10 इतीव पिच — रथाङ्गमुज्झितं
समुद्र — — — — — ॥ २९ ॥

------ चक्रं रथस्य प्रक्रामकं न भवति प्रद्धैररथी-
क्ततैरश्वैः संच -------- ॥ २९ ॥

विलोचनाग्निं विशतो — — —
15 — — — — — — — — ।
दधद्गले दक्षिणदृग्जुषा विभो-
र्विवस्वता प्राप्तचरीं समर्पिताम् ॥ ३० ॥

सूर्येण दत्तां मालां कण्ठे धारयन् । अत्र संभाव्यते । हरस्य
तृतीयनेत्रं विशतः कामस्य हस्तस्रस्तां धनुर्लतां हरस्य दक्षिण-
20 नेत्रस्थेनार्केण हरस्य सकाशात्प्राप्तामद्य सूर्येण दत्ताम् ॥ ३० ॥

द्वितीयवैवस्वतवद्विरोधिनां
हठात्पदं मूर्ध्नि निधातुमुद्यतः ।
विनीलगुल्फाभरणांशुमण्डल-
च्छलेन पादौ दधदायसाविव ॥ ३१ ॥

5 द्वितीयो यम इव शत्रूणां शिरसि बलाच्चरणं चेप्तुं प्रवृत्तो नीलानां गुल्फाभरणानामंशुराशिव्याजेन लोहमयौ पादाविव दधन्। यमो हि लोहमयपादः ॥ ३१ ॥

सपक्षपातं दिनपत्यपत्यमि-
त्यशेषभूमण्डलवन्द्यताकृते ।
10 चकासदंगुष्ठनखप्रभानिभात्
स्थितेन संध्याद्वितयेन पादयोः ॥ ३२ ॥

अयं दिनपतेरपत्यमित्यतो हेतोः समस्तजनैर्वन्दनीयत्वार्थं सानुरागं स्थितेन संध्याद्वयेन चकासच्छोभमानोऽङ्गुष्ठांशुव्याजात् ॥ ३२ ॥

15 मनोरपि प्रस्तुतधर्मशासनः
शनैश्चरादप्यलसः कुपद्धतौ ।
हरीश्वरादप्यतिमित्रवत्सलो
यथोचितं दण्डधरो यमादपि ॥ ३३ ॥

मनोरपि सकाशादारब्धधर्मव्यवहारः । तथा कुपद्धतौ

कुत्सितमार्गे भूमिमार्गे च शनैरप्यलसः। सुग्रीवादप्यतिशयेन मित्रप्रियः। यमादपि यथोचितदण्डः। सूर्योत्पत्त्या मन्वादिभ्यो भ्रातृभ्योतिरेको दर्शितः ॥ ३३ ॥

यदर्थ्यते किंचन येन केनचि-
त्तदस्य कर्णादपि दातुमीश्वरः ।
मनो दधानः सुमनोरुजाक्षयं
विधातुमुज्जागरमश्विनोरपि ॥ ३४ ॥

येन केन चिद्गुणिना निर्गुणेन वा यत्किंचन देयमदेयं वा स याच्यते तदर्थ्यर्थिने दातुं कर्णादप्युत्साहवान्। अश्विनोरपि सतोरश्विनावनादृत्येत्यर्थः। सुमनसां देवानां साधूनां च रुजाक्षये सावधानं मनो दधत् ॥ ३४ ॥

स योपि रेवन्द इति प्रसिद्धिमा-
नपत्यरत्नं नलिनीविलासिनः ।
तुरङ्गविद्याचतुरस्ततोप्यसौ
मधुद्विषः पादसमीपमासदत् ॥ ३५ ॥
विंशत्या कुलकम् ॥

स योपि रेवन्दनामा प्रसिद्धः सूर्यस्य श्रेष्ठः पुत्रस्तस्मादप्यश्वविद्याकुशलो विष्णोः पादतलं प्रापत् ॥ ३५ ॥

स पुष्कराशेषसमुद्रपूरितैः
कुलापगानां पयसा भृतैरपि ।

निधान कुंभैरपि रत्नसंकर-
प्रभाधनैरुत्पलदामहारिभिः ॥ ३६ ॥
अमर्जयद्भूभुजगीविभूषितै-
र्भृशं प्रमोदाश्रुभरेण निर्भरैः ।
महात्मनः षोडशभिर्विलोचनै-
र्महाभिषेकं विधिना सहाच्युतः ॥ ३७ ॥
युगलकम् ॥

सोऽच्युतोस्य महात्मनो विधिना ब्रह्मणा सह महाभिषेकं षोडशभिर्नेत्रैरारब्धवान् । यत आनन्दाश्रुपूरितैः उत्पलमाल-
10 मनोरमैः । तथा भूरेवभुजगी तया समलंकृतैः पुष्करादि-जलपूरितैर्निधानकुंभैरिव । तेऽपि भुजगीवृता भवन्ति । अभि-षेके षोडश कुंभा योज्या इत्याचारः । यद्वा पुष्करादीनां च षोडश संख्यात्वात्कुंभानां षोडशत्वम् ॥ ३६ । ३७ ॥

प्रणामकाले विधिवासुदेवयोः
15 करैश्चतुर्भिश्च करद्वयेन च ।
धृतोत्तमांगः स षडन्तरानपि
द्विषः प्रतिक्षेप्तुमिवाप्तवान्बलम् ॥ ३८ ॥

ब्रह्मणः करद्वयेनाच्युतस्य करचतुष्टयेन प्रणामावसरे धृत-शिराः सन् कामादीन् षट् शत्रून् जेतुं बलं प्रापत् । हस्तानां
20 षट्त्वादिव । प्रतीयमानोत्प्रेक्षा च ॥ ३८ ॥

अशेषगाचोदरगर्भवर्तिनां
तरंगिणीसागरपाथसां लवैः ।
निरित्वरैर्नैचपथेन शार्ङ्गिणः
समस्ततीर्थैरिव सोऽभ्यषिच्यत ॥ ३९ ॥

5 नद्यः सर्वांगसंधिषु कुचौ समुद्रस्थेति — — — हरेः समस्तांगेषु वर्त्तिनीनां नदीनां तथोदरे स्थितानां समुद्राणां जलकणैर्दृङ्मार्गेण हर्षवशान्निर्गच्छद्भिरशेषतीर्थैरिव सोभिषिक्तः ॥ ३९ ॥

निसर्गपूर्णं कलशं दधद्विधि-
10 र्हरिश्च शंखं तत एव पूरयन् ।
धराधिपत्ये प्रमदाश्रुणा स्वतः
कृताभिषेकं पुनरभ्यषिञ्चताम् ॥ ४० ॥

ब्रह्मा कलशं स्वभावजलपूर्णं दधद्धरिश्च समुद्रेभ्यः शंखं पूरयन्नुभौ ब्रह्माच्युतौ प्रथममानन्दबाष्पेण कृताभिषेकं तं
15 चक्रवर्तित्वे पुनरभ्यषिञ्चताम् ॥ ४० ॥

कलौ युगे बुद्धतया स्थितो हरि-
र्ददाति यत्कारुणिको जनान्प्रति ।
तदापदस्मादनुभावसप्तकं
स सप्तलोकीविजयस्य साधनम् ॥ ४१ ॥

कलिकाले बुद्धरूपो हरिर्दयालुर्जनान् प्रति यद्ददाति तदनुभावानां वक्ष्यमाणानां प्रभावाणां सप्तकं विष्णुसकाशा-त्प्रापत् सप्तभुवनजयस्योपायम् ॥ ४१ ॥

महाप्रभावानुपलभ्य सप्त ता-
5 नवाप्तवान् सप्तमचक्रवर्त्तिताम्।
यदस्ति किंचित्करणीयमुच्यतां
तदित्यभूत्प्रांजलिरग्रतस्तयोः ॥ ४२ ॥

सप्त महतः प्रभावानाप्य सप्तमचक्रवर्त्तिभावं लभमानः स कर्तव्यमाज्ञाप्यतामिति वदंस्तयोः पुरो बद्धांजलिरभूत् ॥ ४२ ॥

10 सुदर्शनस्य प्रतिपादकं प्रति
त्रिनेत्रमुत्तानितपूर्वमेकदा।
पुरोस्य विश्वाभयदक्षिणाकृते
प्रसारयामास करं जनार्दनः ॥ ४३ ॥

सुदर्शनस्य चक्रस्य दातारं त्रिनेत्रं प्रति हरिणा कदाचित्
15 पूर्वमुत्तानितं हस्तं हरिरस्याग्रे जगदभयदक्षिणार्थं प्रसारया-मास मोत्तानं कृतवान् ॥ ४३ ॥

ततो नियुक्तः स यथोदिते विधौ
विधौ च देवे च विधौ तिरोहिते।
यशस्यमर्त्यारि (? सरोरु)हां विधौ
20 विधौतपाप्मा भरबन्धमग्रहीत् ॥ ४४ ॥

विधौ ब्रह्मणि विधौ विष्णौ च देवेऽन्तर्भूते सति ताभ्यामसुरवधे प्रेरितो विधौतपाप्माऽनुचितपापः स पुरुषोऽसुरपद्मानां संकोचकलाच्चन्द्रसमे यशसि भरबंधमभिनिवेशं गृहीतवान् ॥ ४४ ॥

5 करेण चापस्य हरेर्मनीषा
बलेन मानस्य नयेन मंत्रिभिः ।
धृतस्य नामाग्रिमवर्णनिर्मितां
स चाहमानोयमिति प्रथां ययौ ॥ ४५ ॥

स पुरुषश्चाहमान इति प्रथां प्राप्तः नाम्नामग्रिमाक्षरैः
10 कृताम् । केषां नामानीत्याह । करेण धृतस्य चापस्य तथा मनीषया धृतस्य हरेस्तथा बलेन धृतस्य मानस्य तथा मंत्रिभिर्धृतस्य नयस्य । चापादीनां नामाद्यक्षरैरिव कृतां चाहमान इति संज्ञां स लब्धवान् इत्यर्थः ॥ ४५ ॥

कदाचिदुत्कंठित एष मा स्म गा-
15 द्विलोकयन्नर्कमितीव विष्णुना ।
विरिञ्चसामान्यमवेत्य लम्भितं
स्वनाभिपंकेरुहमातपत्रताम् ॥ ४६ ॥

एष सूर्यपुत्रः पितर्युत्कंठितः सूर्यं विलोकयन् सूर्यदर्शनहेतोः सूर्यं मागादितीव माहात्म्यविषये ब्रह्मणः सादृश्यमवेत्य
20 विष्णुनास्य स्वनाभिपद्मं छत्रतां नीतम् । छत्रत्वेन नाभिपद्मं हरिरदादित्यर्थः । विलोकयन्निति हेतौ शतृप्रत्ययः । अय-

मर्थः। ब्रह्मा मम नाभिपद्माश्रयः। अयं च ब्रह्मणः सद्मः।
अस्याप्यहं निजपद्मं ददामीति। यद्वा विरिञ्चसामान्यं साधा-
रणमिति नाभिपद्मस्य विशेषणम्। तस्यातपत्रतामवेत्य लम्भि-
तम्। उपेन्येति पाठ आर्षः॥ ४६॥

5　विवृद्धिमानीय दिनानि कानिचित्
　　पुनः पिता ते तनुतां तनोति मे।
　　यशोनिधे तद्विमृहि त्वमेव मा-
　　मितीव सेवापरमिन्दुमण्डलम्॥ ४७॥

तव पिता सूर्यो मां कंचित्कालं संवर्ध्य मम हानिं करोति
10 तस्माद्धेतोर्हे यशस्विंस्त्वमेव मां रक्षेतीव सेवायां सक्तं चन्द्र-
मण्डलम्॥ ४७॥

　　तथा न विश्रांतिपदं रिपुर्मधो-
　　रवैति मां मानद पुष्करं यथा।
　　उपप्लवस्तद्द्रुतमेव वार्यता-
15　मितीव दुग्धार्णवमेव सेवकम्॥ ४८॥

मधो रिपुर्विष्णुः पुष्करं यथा विश्रमस्थानं जानाति तथा
न मां जानाति तस्माद्धेतोर्म्लेच्छोपद्रवः शीघ्रमेव वार्यतामित्यतो
हेतोः सेवकं क्षीरसमुद्रम् (*इव)॥ ४८॥

　　हिरण्यगर्भस्य कमण्डलूदरे
20　यमेव संस्थानविशेषमश्नुते।

* This word is written and then scratched through

तमेव धृत्वेव महेश्वरभ्रमात्
स्थितं ह्रदं मूर्धनि सौरसैंधवम् ॥ ४९ ॥

ब्रह्मणः कमण्डलुमध्ये गंगाजलं यमेव संनिवेशनं प्राप्नोति तमेव संनिवेशं गृहीत्वा यं महेश्वर इति भ्रमाच्छिरसि स्थितं गंगाप्रवाहमिति रूपकम् । अयमपि हि महान् भूमेरी- श्वरः ॥ ४९ ॥

नभस्सरस्सारसयोर्बलद्विषा
हिमाचलस्य स्फटिकाचलस्य च ।
ध्रुवं कृतं पक्षतिभिर्नभश्वरै-
रमित्रशान्त्यर्थमुपायनीकृतम् ॥ ५० ॥

नभ एव सरस्तत्र सारसयोर्हंसयोर्हिमाद्रिकैलासयोः संब- न्धिभिः पक्षतिभिः पक्षैरिन्द्रेण नूनं कृतं सत् शत्रुक्षयार्थं देवैर्ढौकनीकृतम् ॥ ५० ॥

अदृश्यमूर्त्तिः स्वयमुष्णवारणं
रथांगपाणेस्सहधर्मचारिणी ।
समुन्नतिं सूर्यकुले करिष्यतो
रघोरिवास्यापि बभार मूर्धनि ॥ ५१ ॥

जनैरदृश्या श्रीः सूर्यकुले माहात्म्यं करिष्यतोऽस्य रघोरिव शिरसि धृतवती छत्रम् ॥ ५१ ॥ कुलकम् ॥

अयं यथा मे तनयस्तथा कृती
न कश्चिदन्योपि कदाचिदप्यभूत्।
इति स्वकं बिम्बमिवोष्णरश्मिना
प्रतापवृद्ध्यैकृतमानुयाचिकम्॥५२॥
5 अचिन्तयद्यो मनसापि विप्रियं
तमप्युपस्थाय विहन्तुमीश्वरम्।
सुदर्शनादप्यधिकप्रभावभा-
गुपास्तचक्रं विजयेषु तं दिशाम्॥५३॥
युगलकम्॥

10 अयं मम पुत्रो यथा कृती भवति तथा कोपि नान्यो मत्पुत्रोभूदित्यतो हेतोस्सूर्येण प्रतापवर्धनार्थमानुयाचिकं कृतं निजं बिंबमिव॥ तथा यो मनुष्यो देवो वा चित्तेनाप्यनिष्टं चिन्तयति तमप्येत्य निहन्तुं समर्थं यतो हरिचक्रादपि सप्रभावं चक्रं विजयकालेषु तं सिषेवे॥५२॥५३॥

15 प्रजापतेः सृष्टिरिवात्तविग्रहा
स्थितिक्रिया मूर्त्तिमतीव वैष्णवी।
किमन्यदध्यापितरौद्रडम्बरा
स्वयं नवा संहृतिशक्तिरैश्वरी॥५४॥
दधत्यशेषैरपि लक्षणैस्तनू-
20 मलंकृतां रत्नमरीचिमालिनीम्।

अभून्नदीभर्त्तुरिवाधिदेवता
पुरोस्य तांबूलकरंकवाहिनी ॥ ५५ ॥
युगलम् ॥

मूर्त्तिमती ब्रह्मणः सृष्टिरिव । तथा मूर्त्ता विष्णुसंबंधिनी
5 स्थितिरिव । तथा किमन्यद्वर्णयाम इति शेषः । अध्यापितः
शिक्षितो देहडंबरो मूर्त्तिग्रहणं यया सा हरस्य संहारशक्ति-
रिव ॥ सर्वैरुत्तमस्त्रीलक्षणैर्भूषितं नानारत्नधारकं शरीरं
दधती अत एव रत्नाकरस्याधिदेवतेव तांबूलकरंकवाहिनी
पुरोस्याभवत् ॥ ५४ ॥ ५५ ॥

10 रदं ममोन्मूलयति स्म यश्छला-
दमुष्य वक्त्राणि यथैवसंति षट् ।
तथैव दंतान् दनुजक्षयक्षमा-
नहं न गृह्णामि किमित्यसूयया ॥ ५६ ॥
गृहीतवानभ्यधिकं प्रभावतः
15 पतिर्गणानामिव दन्तपंचकम् ।
मुखानुरूपीकृतसर्वविग्रह-
स्तमन्वगादाजिषु गंधसिंधुरः ॥ ५७ ॥
युगलकम् ॥

यो मम दन्तं छलादुन्मूलितवांस्तस्य कुमारस्य यथा षण्
20 मुखानि सन्ति तथैव षट्संख्यान् दानवदलनदक्षान् दशनानहं
किं न दधामीत्यसूयया प्रभाववशाद्दंतपंचकमाददानो मुख-

सदृशीकृतसमस्तशरीर एकदन्त इव गंधहस्ती समरेषु तम-
न्वगात् ॥ ५६ ॥ ५७ ॥

दिगष्टकं जेतुमशेषमंशुमा-
नवश्यमष्टैव बभार वाजिनः ।
5 इमं त्वमुष्मै प्रतिपाद्य सूनवे
ध्रुवं गतः संप्रति सप्तसप्तिताम् ॥ ५८ ॥

\- - - - - - - - - - - -
\- - - - - - - - द्विहायसा ।
स्वकान्तिसर्वस्व - - - - - -
10 - - - - - - - - ॥ ५९ ॥

युगलकम् ॥

एकैनैकेनैक एके जीयंत इति युक्तम् । अतोऽष्टौ दिशो जेतुं सूर्योऽष्टैवाश्वानवहत् । अद्य पुनस्तेषामश्वानां मध्यादेकमश्वं दत्वा सप्ताश्वतां सूर्यो गत इत्येवं कवीनां स्तुतौ योग्यो हयस्तम-
15 न्वगात् । मयूरकण्ठ - - वर्णत्वात्संभाव्यते । विलंघनीयेनाक्रम-णीयेन व्योम्ना दत्तं निजद्युतिसर्वस्वमिव दधत् ॥ ५८ ॥ ५९ ॥

विमुच्य(ते) - - - - - - - - -
\- - - - - - - - दधेः सुता मम ।
इतीव बुद्ध्या परिवर्ज्य कौस्तुभं
20 स्यमंतकः शार्ङ्गभृता समर्पितः ॥ ६० ॥

निषौ(शौ)थमार्त्तण्ड इति क्षमातले
प्रसिद्धनामा सकलेऽपि तं मणिः ।
मृगांकमौलेः सममौर्षिकाधृतः
पितेव चूडाभरणं व्यभूषयत् ॥ ६१ ॥
5　युगलकम् ॥

अस्य दातुं लक्ष्मीसहोदरः मणिः कौस्तुभो मया यद्य-
पसार्यते तर्हि कौस्तुभसोदरी मह्यं कुप्यतीतीव बुद्ध्या कौस्तुभ-
मदत्वा शार्ङ्गिणास्य स्यमन्तको दत्तः ॥ रात्रिरविरिति भूतले
प्रसिद्धो मौलिभूषणभूतस्तथा चन्द्रमौलेः स्पर्धया हेतुभूतया
10　तेन पिता सूर्य इव धृतः । हरश्चन्द्रमौलिः । अहं सूर्यमौलि-
र्भवामीति स्पर्धया धृतः । स्यमन्तकः सुवर्णस्रावी जाम्बवज्जय-
प्राप्तो मणिः ॥ ६० ॥ ६१ ॥

पतिर्धनानामजगंधवासिना
शिवेन दत्तस्व इव स्वतः सखा ।
15　उपागतो वा स्वयमेव रक्षितुं
प्रतार्यमाणो नडकूबरभ्रमात् ॥ ६२ ॥
धनेन कोशाधिपतिर्मृधे मृधे
व्ययीकृतेनाप्यसमाप्तसंग्रहः ।
सुमेरुरत्नाकररोहिणाचल-
20　प्रभावजैर्चो वरिवस्यति स्म तम् ॥ ६३ ॥
युगलकम् ॥

अजगंधाख्यप्रदेशे निवसता शिवेन स्वसमीपादृत्तस्वः सखा वैश्रवण इवोपगतः । अथवा तस्मिन्नलकूबरभ्रान्त्या रचितुं स्वयमेव धनपतिरागतः । इवेत्युत्प्रेक्षा ॥ युद्धे युद्धे व्ययीकृतेनापि भाण्डागारेणासमाप्तः संग्रहो यस्य स कोशपतिर्हेमाद्रिरत्नाकररत्नाचलेभ्योऽधिकस्तं सेवितवान् ॥ ६२ ॥ ६३ ॥

भरक्षमो राक्षससंक्षयं प्रति
त्वयानुजोऽसावनुगम्यतां मृधे ।
इतीव वाक्यं सवितुर्यमः स्वयं
नरात्मना राम इवानुपालयन् ॥ ६४ ॥

अतीव यो दुर्बल एव सर्वथा
तमप्यधिष्ठाय बलिष्ठतां नयन् ।
समासशस्त्रास्त्रविधौ धनंजयो
बभूव सेनापतिरस्य शाश्वतः ॥ ६५ ॥

युगलकम् ॥

राक्षसक्षयप्रवृत्तोसौ कनिष्ठो भ्राता भवतानुगम्यतामित्येतत्सूर्यस्य वचोनुपालयन् मनुष्यरूपेण यम इत्यारोपः । तथा राम इवेति । स हि सवितुः पितुर्दशरथस्याज्ञामपालयत् ॥ तथात्यर्थं यो दुर्बलस्तमप्यधिष्ठाय स्वपक्षीकृत्यातिबलवत्त्वं नयन् । शस्त्रकर्मण्यस्त्रकर्मणि चास्य धनंजयोर्जुनः शाश्वतः सेनापतिरस्यैषोऽभूत् । धनंजयाख्यो वायुश्च बलप्रदः ॥ ६४ ॥ ६५ ॥

स सप्तसप्तेरपि विस्मयप्रदा-
निति प्रभावानुदवाप सप्त यत् ।
तदन्वशात् सप्त सरित्पतीनपि
त्रिपुष्करं नाम किमस्य दुर्जयम् ॥ ६६ ॥

5 सप्तसप्तेः सूर्यस्याप्याश्चर्योत्पादकान् पूर्वोक्तान् सप्त प्रभावान् स यत्प्राप तत्ततो हेतोः सप्त समुद्रानपि स चाहमानो जितवान् । अस्य त्रिपुष्करं किं कथं दुर्जयम् । त्रिभ्यः सप्तानामधिकत्वादिति च ॥ ६६ ॥

स सप्तभिर्वारिधिभिः पुरस्कृतं
10 विजीयमानैरिव रत्नसप्तकम् ।
हरिप्रभावार्जितमूर्जितं दध-
न्न चक्षमे द्वीपपतीनपि प्रति ॥ ६७ ॥

विष्णुप्रसादप्राप्तं पूर्वोक्तं रत्नसप्तकं दधत् । अतः संभाव्यते । जितैः सप्तभिः समुद्रैर्दत्तमिवेति स द्वीपाधिपानपि नास-
15 हिष्ट ॥ ६७ ॥

स पूर्वरंगार्थमिव क्षमातले
मधुद्विषा स्थापकतामनीयत ।
प्रपित्समानेन विहाय बुद्धतां
समुद्धतां म्लेच्छचिकित्सिनीं तनुम् ॥ ६८ ॥

20 शांतं बुद्धरूपं त्यक्त्वा म्लेच्छच्छेदकं रूपं प्रपत्तुमिच्छता

दैत्यारिणा स चाहमानः पूर्वरंगार्थं स्थापकतामिव नीतः।
स्थापकः सूत्रधारः। नटेन च प्रथमाभिनीतं रूपं त्यक्ता
रूपान्तरं कर्तुंकामेन सूत्रधारः क्रियते ॥ ६८ ॥

विकंटकीकृत्य स सर्वतो धरां
5 प्रतापपुष्टांश्च विधाय भूभृतः।
क्रमेण दावाग्निरिवोदपीपदद्
घनं प्रजातापसमापनं कुलम् ॥ ६९ ॥

समस्तां भूमिं निष्कण्टकां कृत्वा भूभृतो राज्ञश्च प्रतापेन
धूम्रान् कृत्वा स घनमसंख्यं मेघं च प्रजातापनिवारकं कुल
10 मजनयत्। अत एव दावाग्निरित्युपमा ॥ ६९ ॥

समागतः पुष्करतीर्थयात्रया
प्रसंगतः कंचन कालमुर्वराम्।
परीक्ष्य सर्वामधियोगिनां गुरु-
र्यथागतं भास्करमंडलं ययौ ॥ ७० ॥

15 त्रिपुष्करे तीर्थे तीर्थयात्रया हेतुभूतया भूमिमागतः
प्रसंगेन महीं परीक्ष्य परिपाल्य स महायोगी यथागतं सूर्य-
मंडलं प्रति गतवान्। योगी च सूर्यमंडलं प्रविशतीत्यर्थ-
च्छाया ॥ ७० ॥

अचाहमानापि रराज मेदिनी
20 विगाहमाना रुचिरं तदन्वयम्।

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL
NEW SERIES, No. 1420.

# PṚTHVĪRĀJA VIJAYA.

## A SANSKRIT EPIC WITH THE COMMENTARY OF JONARĀJA.




BY

S. K. BELVARKAR. M.A., PH.D.

FASC. II.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1918

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agent—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London,* W.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. A |
|---|---|
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each .. .. | 3 |
| Advaitachintā Kaustubha, Fasc. 1–3 @ -/10/- each .. . | 1 |
| Agni Purana (Text), Fasc. 1–14 @ -/10/- each .. .. .. | 8 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each .. .. | 1 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5; Vol II, Fasc. 1–5, Vol. III, Fasc 1–5, Vol. IV, Fasc. 1–8 @ -/1 /- each.. .. . | 14 |
| Aitareyalocana .. .. .. . .. | 2 |
| Amarakosha, Fasc. 1–2 .. .. . . .. | 4 |
| *Anu Bhasyam (Text), Fasc. 2–5 @ -/10/- each .. . .. | 2 |
| Anumana Didhiti Prasarini, Fasc 1–3 @ -/10/- each . | 1 |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- .. .. | 1 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each .. .. | 3 |
| Atharvana Upanishads (Text), Fasc. 1–5 @ -/10/- each .. .. | 3 |
| Ātmatattvaviveka, Fasc. 1–2 .. . . .. .. | 1 |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13, Vol. II, Fasc. 1–11 @ 1/- each .. .. .. .. | 24 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1–2, Vol. II, Fasc. 1 @ -/10/- each .. | 1 |
| Bardic and Historical Survey of Rajputana. A Descriptive Catalogue of Bardic and Historical Manuscripts. Sec. I, Prose Chronicles, Part I, Jodhpur State .. .. .. .. | 1 |
| Ditto Descriptive Catalogue of Bardic and Historical Manuscripts, Sec. I, Prose Chronicles, Part II, Bikaner State .. | 1 |
| Ditto Descriptive Catalogue of Bardic and Historical Manuscripts. Sec. II, Bardic Poetry, Part I, Bikaner State.. .. | 1 |
| Bardic and Historical Survey of Rajputana. Vacanikā Rāthora Ratana Sūrghajī rī Mahesadāsòta ri Khiveyā Jagā rī Kahī .. | 1 |
| Bauddhastotrasangraha .. .. .. .. .. | 2 |
| Baudhāyana Śrauta Sūtra, Fasc. 1–3; Vol II, Fasc. 1–5; Vol. III, Fasc. 1–2 @ -/10/- each .. .. .. .. | 6 |
| Bhamati (Text), Fasc. 1–8 @ - 10/- each . . .. . | 5 |
| Bhasavritty .. .. .. . .. - .. | 0 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each .. | 5 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -10- each .. .. | 4 |
| Brahma Sutras (English), Fasc. 1 @ 1/- . .. .. | 1 |
| Bṛhaddevatā, Fasc. 1–4 @ -/10/- each . .. .. | 2 |
| Bṛhaddharma Purāṇa, Fasc. 1–6 @ -/10/- each . .. .. | 3 |
| Çatadūṣaṇī, Fasc. 1–2 @ -/10/- each.. .. .. . | 1 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each .. | 8 |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–7; Vol. V, Fasc. 1–4 @ -/10/- each .. | 14 |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/- each .. .. | 3 |
| Ditto Vol. VII, Fasc. 1–5 @ -/10/- .. .. | 3 |
| Ditto Vol. IX, Fasc. 1–2 .. .. .. | 1 |
| Çatasahasrikā-prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 @ -/10/- each .. .. .. .. | 11 |
| *Caturvarga Chintāmani, Vol. II, Fasc. 1–25; Vol. III, Part I, Fasc. | |

प्रवीराः श्रीचाहमानस्य कुलमभूषयन्नित्यन्वयः । आदित्यरश्मिभिर्दुरतिक्रमं दुर्लंघं यत्पारियात्रकपार्श्वांतर तत्र प्रतिदिनं पथिकः कीर्त्तिः कायो येषां ते । तथा सप्तसमुद्रविषयः शाश्वतो नित्यो यो वाडवाग्नेर्व्यापारः ज्वलनं तस्य पारगमने 5 पराभवे प्रगुणः समर्थः प्रतापो येषाम् । ७३ ॥

दृष्टस्वपूर्वपुरुषोदयभूप्रदेश-

सेनारजोऽभिभवखिन्नसहस्रनेत्राः ।

अश्रांतयज्ञशततर्पितहव्यवाह-

शुद्धान्तगीतभुजसाहससंप्रदायाः ॥ ७४ ॥

10 स्वपूर्वपुरुषस्यादित्यस्योदयभूप्रदेश उदयपर्वतो दृष्टो येन तस्य सेनारजसोभिभवेन खिन्नः खेदितः सहस्रनेत्रो यैस्ते । सहस्रनेत्र इति साकूतम् । तथा अश्रांतं नित्यं कृत्वा यज्ञशतेषु तर्पितो यो हव्यवाहोऽग्निस्तस्य शुद्धान्तः स्वाहा तया गीतो भुजसाहससंप्रदायो येषां ते ॥ ७४ ॥

15 वैवस्वतायुधभुजङ्गमसह्यमान-

निश्श्रोत्रताऽनधिगतोष्ट्रचमूनिनादाः ।

लङ्काधिपत्यभयदानमयापदान-

वार्ताश्रुतिक्षपितनैऋर्तचित्तदौस्थ्याः ॥ ७५ ॥

वैवस्वतस्य यमस्यायुधैः पाशैर्भुजगमैः सह्यमानो यतो 20 निष्कर्णतयाऽनधिगत उष्ट्रसेनाशब्दो येषां ते । तथा बिभीषणस्याभयदानरूपं यदपदानं साहसं तद्वार्त्ताश्रवणेन क्षपितं

निवारितं चित्तदौस्थ्यं चित्ते चोभो येषां ते । अयमर्थः । अस्मद्वंश्येन श्रीरामेणास्मै राज्यं दत्तमिति तैर्जिष्णुभिर्बिभीषणस्याभयं दत्तमतस्तत्पचभूतस्यापि नैर्ऋतस्याप्यभयं ग( ? फ)लितमिति ॥ ७५ ॥

5 प्राचेतसप्रियतमासुरतान्तखेद-
निर्भेदवेदिकटकद्विपकर्णवात्याः ।
पूर्णोदरज्वलननिर्वृतिनिर्विकार-
सारथ्यमुक्तमरुदीरितसाधुवादाः ॥ ७६ ॥

प्राचेतसीनां प्रियतमानां वरुणस्त्रीणां सु(र)तान्तखेदस्य 10 निर्भेदं विदन्ति कुर्वन्ति । खेदहारिण्य इत्यर्थः । एवं विधाः कटकद्विपानां कर्णवात्या येषाम् । तथा यज्ञेषु पूर्णोदरो यो ज्वलनस्तस्य निर्वृतिः सुखं तया निर्विकारो यतः सारथ्यमुक्तो यो मरुत्तेनेरितः साधुवादो येषाम् ॥ ७६ ॥

कैलासशैलशिखराश्रयकिन्नरेन्द्र-
15 कर्णामृतह्रदपराक्रमगीतशब्दाः ।
ईशानचंद्रसहवासमहाविदग्ध-
दोर्दण्डकौर्त्यधरितद्युसरित्प्रवाहाः ॥ ७७ ॥

कैलासनिवासिनां संबंधी कर्णयोः सुधाप्रवाहसदृशः पुरुषकारगीतशब्दो येषां ते । तथा इशानचन्द्रेण सह वासे 20 महाविदग्धो दोर्दण्डकौर्त्या भुजयशसाऽधरितो जितो गंगौघो यैस्ते ॥ ७७ ॥

एवमष्टदिक्पालपराजयध्वननमुक्त्वा हरिसेवादिरूपेण पातालाकाशव्यापकतामाह ।

सेनाहयोद्गमितधूलिलघूभवन्भू-
धृत्यल्पयत्नफणिशायितवासुदेवः ।
5 लक्ष्मीमुखोच्च(र)णलग्नसुधासधर्म-
माधुर्यकीर्त्तिसुखिनीकृतसप्तलोकाः ॥ ७८ ॥

सेनाश्वैरुत्थापिता धूलिर्यस्यास्ततो लघूभवन्ती या भूस्तस्या धृत्यर्थं धारणार्थमल्पयत्ने फणिनि शेषे शायितो वासुदेवो यैस्ते । तथा अत एव लक्ष्म्या मुखोच्चरणेनेव लग्नं सुधा-
10 सधर्मामृतसमं माधुर्यं यस्याः । तथा कीर्त्त्या सुखीकृताः सप्तलोका यैस्ते ॥ ७८ ॥

ब्रह्मारविन्दमकरन्दकणान्तरङ्ग-
तौरङ्गधूलिविरसीकृतदिव्यभृंगाः ।
श्रीचाहमानकुलमुज्ज्वलयांबभूवु-
15 र्दोर्मंडलाभरणभूवलयाः प्रवीराः ॥ ७९ ॥

ब्रह्मकमलव्यापिवाजिरजोविरक्तालिकुलाः । तथा दोर्मंडलस्याभरणं भूवलयो येषां ते ॥ ७९ ॥

रिक्थक्रमादुपनतं नलिनीभुजंगा-
दारभ्य यद्वसु ददुः शरणागतेभ्यः ।

वाणिज्यवर्धितमिवानुदिनं तदेषां
प्रायो भुवोऽनरविशिष्टदशाप्रवेशम् ॥ ८० ॥

सूर्यादारभ्यरिक्थक्रमादुपनतं प्राप्तं वसु तेजो धनं च ते शरणागतेभ्यो यद्ददुः । यद्वा शरणागतेभ्य - - - - ददुरिति योज्यम् । शरणागतेभ्यो - - - - - । तद्वाणिज्येन व्यवहारेण वर्धितमिव तद्वसु उत्तरोत्तरं विशिष्टदशाया अनुप्रवेशं प्रापत् ॥ ८० ॥

वास्तोष्पतेः समरपर्वसहायतार्थ-
मायासितैः सततमूर्ध्वगतागताभ्याम् ।
प्रेतप्रभोरसुशकैरपि नेतुमुर्व्या-
स्तैः स्वेच्छयैव विदधे त्रिदिवे निवासः ॥ ८१ ॥

वास्तोष्पतेरिन्द्रस्य संग्रामेषु साहाय्यार्थमूर्ध्वगतेनाकाशगमनेन तथा आगतेन आकाशाद्भूमाववरोहणेन च नित्यं खिन्नैः । तथा यमस्यापि भूमेः सकाशान्नेतुमशक्यैस्तैः स्वेच्छयैव स्वयमेव स्वर्गे निवासः कृतः ॥ ८१ ॥

अष्टासु दिक्पतिपुरेषु यथेष्टमेषां
रक्षःक्षयोपकृतये कृतिनां स्थितानाम् ।
भूस्तंभिताष्टगिरिमंडपदिग्द्विपेन्द्र-
स्तंभाष्टकेन समपद्यत राजधानी ॥ ८२ ॥

अष्टसु लोकपालनगरेषु राक्षसविनाशेनोपकारार्थं स्वेच्छया

स्थितानामेषां चाहमानवंश्यानां राज्ञां भूमिः राजधानी नगरी संपन्नाऽभूत्। स्तंभितान्यष्टगिरय एव मंडपानि येन तद् दिग्द्विपेन्द्राणामेव स्तंभानामष्टकं यस्याः । राजधान्याश्च मंडपधारणार्थं स्तंभा अष्टौ भवन्ति ॥ ८१ ॥

5 **वंशे तेषामशेषप्रथमनृपभुजाकीर्त्तिसंपद्बलाका-**
**प्रेमारंभानुकूलच्छविसदसिपटांभोदविश्रांतिशैलः।**
**कैलासोत्संगसंगीतकसभिकशिवादिष्टगंधर्वरामा-**
**गातव्योद्दामकर्मा समजनि वसुधावासनो वासु-**
**देवः ॥ ८३ ॥**

10 तेषां कुले वासुदेवनामा राजा जातः। समस्तानामादिराजानां या कीर्त्तिसंपत् सैव बलाका तस्याः प्रेमारंभे सु(?सा)धुर्योऽसिपटः स एवांभोदस्तस्य विश्रांत्यर्थं शैलः। पूर्वेषां कीर्त्तिवर्धक इत्यर्थः। कैलासोत्संगे सभिकेन शिवेनादिष्टाभिर्गंधर्वरामाभिर्गातव्यान्युद्दामकर्माणि साहसानि यस्येति 15 भद्रम् ॥ ८२ ॥

श्रीलोलराजसुतपंडितभट्टनोन-
राजात्मजो विवरणेन सुबोधमाधात्।
सर्गं द्वितीयमशनैरिह जोनराजः
पृथ्वीमहेन्द्रविजयाभिधकाव्यराजे ॥ १ ॥

इति पृथ्वीराजविवरणे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ॥

समभूद्यदा स - - दानविधि-
वंवृषुस्तदा सुमनसो जलदाः ।
परिकंपिनां यशसि हानिभयात्
सुरशाखिनां स्वयमिव स्खलिताः ॥ १ ॥

5 यदा स वासुदेवो जातस्तदा मेघाः कल्पवृक्षाणां पुष्पाणि ववृषुः । अत्र संभाव्यते । यतो दानेन निधिरतो यशोविषये हानिभयात कंपमानानां कल्पवृक्षाणां स्वयं पतितानीव । कल्पवृक्षेभ्योप्यधिकं दातेत्यर्थः ॥ १ ॥

ननृतुर्दिनं सकलमप्सरसः
10 परिदध्वनुर्विजयदुन्दुभयः ।
प्रमदं दधुर्यममृतोद्धरणात्
पुनरेव तं सुमनसोन्वभवन् ॥ २ ॥

अप्सरसो ननृतुः । दुन्दुभयो दध्वनुः । सकलं दिनमित्यने-नोभयोर्वाक्ययोः संबंधः । अमृतलाभेन देवा यं हर्षं प्रापुस्त-
15 ज्जन्मना तं पुनरेव प्रापुः ॥ २ ॥

द्युनदीहृतैः कनकतामरसै-
र्मरुतो ववर्विरचिताभरणाः ।

गगनात्मना शशिशिरोमणिना
प्रकटीकृता कनकवृष्टिरिव ॥ ३ ॥

गंगाहेमपद्मैः कृतभूषणा वायवो ववुः। अतः संभाव्यते। आकाशरूपेण शशिशेखरेण सुवर्णवृष्टिरिव मुक्ता ॥ ३ ॥

5 दिवमुच्चकैरभृत तस्य यशो
जलदैर्विना जलकणैः पतितम्।
परिपीडितादमृतदीधितितो
विनिरित्वरैरिव सुधापृषतैः ॥ ४ ॥

तस्य यशो द्यामपूरयत्। मेघैर्विना जलकणैः पतितम्।
10 तद्यशसा पीडिताच्चन्द्रान्निर्गच्छद्भिरमृतकणैरिव। इत्वरैरिति सृजीणनशां ष्करप्* ॥ ४ ॥

सवितुः कुले कति न भूपतयो
भुजशालिनः समभवन्नपरे।
स पुनर्यथा व्यवजहार तथा
15 न भगीरथो न सगरो न रघुः ॥ ५ ॥

सूर्यस्य कुलेऽपरे कति न राजानो भुजाभ्यां शोभमानाः प्राग्जाताः। स वासुदेवस्तु यथा व्यवहारमकरोन्न तथा भगीरथादयः ॥ ५ ॥

* Compare Panini iii 2 163

न स पर्वतो न तदरण्यमभू-

न्नगरी न सा न मरुमही न च सा ।

स विनिर्ममे न खलु यत्र नृपः

सरसीः प्रपाः सुरगृहाणि मठान् ॥ ६ ॥

5 स राजा सरस्यादीन्यत्र नाकरोत्ते पर्वतादयो नाभवन् । सर्वेषु पर्वतादिषु सरस्यादीन् कृतवानित्यर्थः ॥ ६ ॥

न शिखंडिनो जलधरं प्रथमं

न चकोरकाः शुचिनिशाशशिनम् ।

न पिकास्तथा तरुणमाम्रवनं

10 जहृषुः प्रजास्तमवलोक्य यथा ॥ ७ ॥

यथा त दृष्ट्वा जनास्तुतुषुस्तथा न मयूरादयो मेघादीन् दृष्ट्वा तुष्यति । मेघादिभिरिव मयूरादयस्तेन प्रजा दत्तवृत्तय इत्यर्थ. ॥ ७ ॥

न हिमाद्रिणा प्रलयजेन तथा

15 शिशिराऽभवच्चिरमनेन यथा ।

न सुमेरुणा न मणिभूमिभृता

वसुमत्यपि क्षितिरनेन यथा ॥ ८ ॥

यथानेन राज्ञा हृततापा भूरभून्न तथा हिमाचलचन्द्र-नाभ्याम् । यथामुना भूर्धनवत्यभून्न तथा सुमेरुरोहि- - - -

20 - - - -

-------वती क----
(कमलाल)याऽऽगवती नृपतीन् ।
कमलोपमादपि तदंघ्रिमगात्
प्रणिपत्य तां पुनरवापुरमी ॥ ९ ॥

5 या लक्ष्मी राज्ञस्त्यक्त्वाऽऽगतवती ताममी अपि राजानस्तत्पादपद्मद्वयं प्रणम्य ततः प्रापुः । अत एव कमलालयेति विशेषणमर्थवत् । तत्सेवकानामेव राज्ञां श्रीरासीन्नाऽन्येषामिति भावः ॥ ९ ॥

मखभूमिगैः शतमखप्रमुखै-
10 ररुदन्यतो दिगधिकप्रमदाः ।
मखधूम्यया निरपवादमतः
परिबभ्रमे पिहितदिक्तटया १० ॥

अस्य यज्ञगतैरिन्द्रादिभिर्हेतुभिस्तद्रामा अरुदन् रुदन्तीति यज्ज्ञातमिति शेषः । अतस्तन्मखधूमजालेन च्छादितदिगन्तेन
15 निरपवादं कृत्वा भ्रान्तम् । अयमर्थः । मख------लोकपालस्त्रीणां बाष्पनिर्गलनमभूत् । लोकास्त्वजानन् । चिरं पतिप्रवासो बाष्पहेतुरिति । न तु स तासामभूत् । यद्यज्ञेषु इन्द्रादीनां पोषलाभात् । अतो यज्ञधूमेन दूषणं न प्राप्तम् । अथवा पतिप्रवासेन लोकपालाबला यदरुद------यज्ञ-

धूम्यया नि -------- नेनैवैता हदन्तीति लोकैर्ज्ञात-
मित्यर्थः । दृक्पुटयेति पाठः ॥ १० ॥

**सुरसद्मनामविरतापचितौ**
**द्रुममस्तके न कुसुमं ददृशे ।**
5 **अपरागिणं विदधिरे पवनं**
**नभसागतं क्वचन नोपवने ॥ ११ ॥**

देवानां नित्यपूजायां सत्यां तरुविटपेषु पुष्पं न दृष्टम् ।
ततो हेतोः क्वाप्युद्याने जना वायुमपरागिणं सदोषं न
विदधुः । परागाभावेऽप्यपरागिणं न विदधुरिति विभावना ।
10 क्वचित् 'अपरागवानपि वहन्नशनैः पवनोऽभवत्क्वचन नोपवने'
इति पाठः ॥ ११ ॥

**चरणैस्त्रिभिस्त्रुटितसंघटितै-**
**र्व्यहरत्सुखं स्मरहरस्य वृषः ।**
**पदमुद्रिता नियतमस्य सदा**
15 **न हिरण्मयी न समपादि मही ॥ १२ ॥**

स्मरहरस्य वृषो धर्मः सुखेन व्यहरत् । अत्र हेतुः । त्रिभिः
पादैः पूर्वं विच्छिन्नैरद्य संघटितैस्त्रुतुष्पाद् धर्मोऽभूदित्यर्थः ।
नूनमस्य वृषस्य चतुर्भिः पादैः कृतमुद्रत्वाद्भूः सुवर्णमयी संपन्ना ।
खनिस्थानेषु भूः सुवर्णमजीजनदित्यर्थः । हरवृषो यत्र संच-
20 रति तत्र जातरूपं जायत इत्यागमः ॥ १२ ॥

यशसा भृता जलधिविष्णुपदे
शशिमंडलं न न बभूव मही ।
न च कलंकवन्न च विधुन्तुदवत्
कलिता पुनः क्वचिदवापि पदम् ॥ १३ ॥

5 तदीयेन यशसा भृता भूः समुद्राकाशे चन्द्रमंडलं न नाभूत् । अपि त्वभूदेवेत्यर्थः । कलंकेन राहुणा यथा पद-मवापि तथा कलिकालेन क्वापि न स्थानं लब्धम् । अयमर्थः । समुद्र एवाकाशं तत्र यशश्शुभ्रा भूमिरेव चन्द्रोभूत् । चन्द्रस्य कलंकोऽस्ति राहुश्च बाधते । यशश्शुभ्रभूमण्डलस्य तु कलि-
10 कलंकराहुरूपो नासीदित्यर्थः ॥ १३ ॥

सुरमंदिरैर्दिशि विदिश्युदितं
मरुतां पतिर्मखमहीष्ववसत् ।
अमरावती किमपि कालवशाद्-
व्यथिताभवत् पथिकयोषिदिव ॥ १४ ॥

15 देवगृहैः सर्वदिगुल्लसितम् । यज्ञभूमिष्विन्द्रोऽवसत् । काल-बलादमरावती पथिकस्त्रीव किमपि व्यथिताभवत् ॥ १४ ॥

उपनिन्यिरे शिखरिणो लघुतां
पृथुना न तां न च शतक्रतुना ।
अनयन्त यां सुकृतिनः पुरुषा
20 दृषदुद्धृतेः सुरगृहस्य कृते ॥ १५ ॥

पृथु नाम्ना राज्ञा इन्द्रेण च शैलास्तां लघुतां न नीता देवगृहनिर्माणार्थं पाषाणोद्धरणाज्जना: पर्वतान्यथा लघुताम-नयन् ॥ १ ५ ॥

शकलीकृताः सुरगृहेषु शिला-
स्समिधां कृते विदलितास्तरवः ।
न च धातवो न ययुरुद्धरणं
क्षितिमित्यगात् क इव न क्षितिभृत् ॥ १६ ॥

देवगृहकृते पर्वतानां शिला: खण्डिता: । समिदर्थं च वृक्षा दारिता: । चित्रार्थं गौरिकादय उद्धृतास्तत: सर्वे पर्वता: चितिमल्पप्रमाणत्वं प्रापु: ॥ १ ६ ॥

मुहुरीतयः प्रविविशुर्न भुवं
भुवनान्तरे क्वचिदिवात्तपदाः ।
यदि वा क्व ता विरचयन्तु पदं
परिपूरिताः सुकृतिभिर्हि दिशः ॥ १७ ॥

ईतयोऽतिवृष्ट्यादयो भुवनं न प्राविशन् । अत: संभाव्यते क्वाप्यन्यस्मिन् भुवने कृतास्पदा: । अथवा नैतत् । कस्मिन् भुवने ईतय: पदं कुर्वन्तु । हियस्मादर्थे । तदीयाभि: सुकृतिभि: शोभनै: कर्मभिर्दि----ता: ॥ १ ७ ॥

अतिवृष्टयो ववृधिरे सजलै-
र्नयनैः परं रिपुकुरङ्गदृशाम् ।

अनवग्रहं खमपि सत्पुरुषाः
प्रतिपेदिरे सततभाग्यमयाः ॥ १८ ॥

रिपुस्त्रीणां मशाष्पैर्नैरतिवृष्टयः प्रवृद्धाः। नित्यभाग्यमयाः सत्पुरुषाः खमाकाशमनवग्रहमवृष्टिप्रतिबन्धं प्रतिपन्नाः।
5 अविद्यमानो नवो ग्रहो नेयत्येन विमर्शो यत्र तत् खं संवित्स्वभावं प्रतिपन्नाः। नवग्रहरहितं खमिति विरोधः ॥ १८ ॥

क्षितिरग्रहीत् कमपि दार्ढ्यगुणं
क्वचिदाखवो न खलु चखनुरमूम्।
अत एव तां परमनिर्विवरां
10 विपदां गणा न परितस्तरिरे ॥ १९ ॥

वक्तुमशक्यं दार्ढ्यगुणं भूर्लेभे। मूषका भूमिं न खनितवन्तः। अत इव विच्छिद्रां भूमिमापदां गणा नैवाच्छादयन् ॥ १९ ॥

शुकवाहने सततवृप्तिमये
न दधुः शुकाः क्वचन शालिभयम्।
15 क्रतुधूमतो दिशि दिशि प्रसृता-
दुपलेभिरे न विषयं शलभाः ॥ २० ॥

शुका वह्निवाहा इत्यागमः। शुकवाहनेऽनले नित्यतृप्ते इव शुकाः शालीनां भयं न दत्तवन्तः। तेषां पावकतृप्तौ

सत्यां हृष्टत्वात् । सर्वदिक्षु विसारिणो यज्ञधूमाद्धेतोरिव शलभा आश्रयं न लब्धवन्तः ॥ २० ॥

न निवेशितैर्गिरिगुहासु तथा
न तथा पुरं पितृपतेः प्रहितैः ।
5 चरणाग्रगैर्नृपतिभिर्नृपतिः
स यथा प्रजाः सुखवतीरकरोत् ॥ २१ ॥

प्रणमिते राजभिस्स राजा प्रजाः सुखिता यथाऽकरोत्तथा-ऽद्रिगुहासु प्रवेशितैस्तैर्नाकरोत्तथा न च यमपुरं विसृष्टै राज-भिरकरोत् । पलायितानां पुनरुदयाशंकया मारितानां ये
10 मुक्तास्तेषामुदयाशंकयेति भावः ॥ २१ ॥

उपयोगवान्यदि रणार्थमभूत्
स्वयमेव तन्मखमहीष्ववसत् ।
भुजयोर्बलादभयदानपतिं
दनुजागमे तमनयन्मघवा ॥ २२ ॥

15 इन्द्रो *वासुदेवस्य रणार्थमुपयोगी यद्यासीत्तदा इन्द्र-स्तदीययज्ञभूमिषु स्वयमेवावसत् । दानवयुद्धागमे तमिन्द्रो भुजबलेनाभयदातारमनयत् ॥ •२ ॥

* This is the text as emended in the margin, the original was स वासुदेवो दैत्यसमरे शक्रस्योपयोगी, etc

व्यसनैरसावतितरां मलिनै-

रपि सप्तभिः स्वयमधो विहितैः ।

----- सकलदिग्विजयं

तुरगैरिव स्वकुलपूर्वपुमान् ॥ २३ ॥

5 अत्यन्तमलिनैः सप्तभिः --- रशेषदिशः क्रान्तवान्यथाधः-

कृतैः सप्तभिरश्वैः स्ववंशपूर्वपुरुषःसू ----॥ २३ ॥

----- भुजबलेन दधौ ।

चरितार्थतां पुनरगाद्वसुधा

10 यदनेन सा वसुमती विदधे ॥ २४

स राजा भुजबलेन यद्भूमिं धृतवांस्ततो हे--------

त्यार्थोऽभूत् । क्षितिं बिभ्रतीति व्युत्पत्तिर्मृषाभूत् । भूर्वसुधा

सत्यार्थतामधात् । यतोनेन राज्ञा भूर्वसुंधरा वसुमती सतेजाः

सधना च कृता । स राजैव भूमेर्वसुभृत आसीदित्यर्थः ।--

15 चरितार्थतां भूर्वसुधात्वभूदित्यर्थः ॥ २४ ॥

नृहरिः स्वयं -------

- जहुर्मदं तदिति दिक्करिणः ।

अनहंकृतिं फणिपतिं व्यदधात्

कलिपन्नगे -------॥ २५ ॥

---------- मध्ये हरिः सिंहो नामासौ हरिस्तरुणसिंहस्य स भूमिं यदधात्तत एव ----------मुद्वहनाधिकारहरणादिति भावः । सिंहे च सति गजा मदं त्यजन्ति । शेषमनहंकृति त्यक्ताहंकारमकरोत् । कलिसर्पं गरुत्मतां राजा यदवहत् । भुवो दुरितभारं यन्न्यवारयत् । अलघूभवन्तीं भुवं वहञ्छेषो निरहंकारो जात इत्यर्थः । फणिमारणात् फणिपतिस्तुष्यतीति चित्रम् ॥ २५ ॥

**भुवमुद्धरन्नजनयन्नरकं**
**प्रममाथ तं मधुरिपुश्च पुनः ।**
**स पुनस्तथा त्रिदिवमर्जितवान्**
**क्रतुभिश्च तं सुवसतामनयत् ॥ २६ ॥**

भूमिमुद्धरन्मधुरिपुर्नरकमुदपादयत् । ततः स एव नरकं हतवान् । स राजा पुनर्भूमिमुद्धरन्निरुपद्रवां कुर्वंस्तथा स्वर्गमर्जितवान् । स तं स्वर्गं यज्ञैः सुवसतां यथानयत् । यज्ञतृप्ता देवाः स्वर्गे सुखमासन्नित्यर्थः ॥ २६ ॥

**अतिसंकुचन्नवयवैः सकलै-**
**र्यमधः स्थितो वहति कूर्मपतिः ।**
**उपरिस्थितः सकलभूमिभृतां**
**स विकस्वरः क्षितिभरं तमधात् ॥ २७ ॥**

भूमेरधः स्थितः कूर्मराजोऽङ्गैः संकुचन्यं वहति तमेवायं राज्ञामुपरि स्थितः सराज्याङ्गैर्विकसितोऽवहत् ॥ २७ ॥

अवहेलया यदकरोत्स किम-
प्यतिदुष्करं किमपि येन विधेः ।
5 तत एव न ध्रुवमपत्र(प)या
तदधिष्ठितां स वसुधामरिशत् ॥ २८ ॥

सोऽयत्नेन यत्समपादयत्तद्विधिनापि कर्त्तुं यद्दुष्करम् । अत एव लज्जया । ध्रुवं संभावनायाम् । स विधिस्तदाश्रितां भुवं नारिशद्धिंसितवान् । रिश हिंसार्थस्तौदादिकः । अविश-
10 दिति पाठस्त्विन्यः ॥ २८ ॥

यदि वा शुचेरजनि यस्य कुले
स विधेर्गतिः परिभवेष्वभवत् ।
भगवान्स्मरन्नुपकृतिं न तत-
स्तदलंकृताः परिबभूव दिशः ॥ २९ ॥

15 यदि वेति पूर्वसंभावनायाः पक्षान्तरमाह । यस्य स कुले जातः स चाहमानो विधेरसुरैः परिभवे शरणमभूत् । तस्माद्धेतोरुपकारं स्मरन्भगवान्विधिस्तद्भूषिता दिशो नाव्य-थयत् ॥ २९ ॥

सोध्वर (V, 38?) इत्यन्तं कुलकम् ।

चरणेऽपि यो मदनुगं व्यथये-
न्मुखभंजनं सुकरमस्य मया।
इति ते कथां स्मरति धर्मपरां
न कलिर्मुखं क्वचन दर्शयते ॥ ३० ॥

5 यो मत्सेवकं पादेपि व्यथयेदस्य मुखभंगो मया क्रियते। इमां धर्मनिष्ठां तव प्रतिज्ञां यत्स्मरति ततो नूनं कलिर्मुखं क्वापि न दर्शयते। कलिना हि त्वदाश्रितो धर्मः पादे खंडित इति भावः ॥ ३० ॥

तव पादयोरपसृताः सविधा-
10 द्भयविह्वला ध्रुवमभाग्यशतैः।
अतिरोहिताः कमलया क्षितिपाः
प्रतिजज्ञिरे तदनु पस्पशिरे ॥ ३१ ॥

तव पादयोः समीपान्नष्टा अत एव भीता अभाग्यशतै-र्लक्ष्म्यानाच्छादिता राजानो नूनं परिज्ञाता यत्समनन्तरमेव 15 पस्पशिरे बाधिताः। अपसृतैः भयविक्लवैरिति तृतीयाबहु-वचनान्तः पाठश्चिन्त्यः। पस्पृशिरे स्पृशेस्स्व पाठो विमृश्यः। पस्पशिरे — — — — — — — धने इत्यस्य लिटि रूपम्। राज-द्रुहं परिज्ञाय लोका बाधन्ते। यद्वा* त्वं तस्यापि अभाग्यानि न सहसे इत्यतो भीतैः त्वत्सेवात्यागिनः परिज्ञाता यदतः

* This alternative interpretation is given in a marginal note

स्पृष्टाः। त्वद्वैरिणामभाग्यान्यापतितानीत्यर्थः। अस्यां व्याख्यायां दुष्पाठो न कश्चित् ॥ ३१ ॥

भविता पुरः सहचरैर्द्विषतां
वरिवस्यतां नृप भवच्चरणौ।
इति सूचितं खलु तवैव नखै-
र्यददर्शयन् प्रतिनिधीननुगान् ॥ ३२ ॥

हे नृप त्वत्पादौ शरणीकुर्वतां शत्रूणां सहचरैः पुरो भा(?)विता भविष्यते इत्येतत्त्वन्नखैरेव सूचितम्। अत्र साध्ये साधनमाह। भवन्नखाः शत्रूणां प्रतिनिधीन् प्रतिबिम्बसमान् शत्रूणामनुगानदर्शयन्। भवन्नखेषु निर्मलत्वान्नमन्तो भवद्द्विषः प्रतिबिम्बिताः। ते प्रतिबिम्बा भवच्छत्रूणां सहचराः पुरो वर्तन्ते (इ)त्यर्थः। त्वत्पादसेवकानां सहचरसामग्री भवतीति भावः ॥ ३२ ॥

न हिमालयो न हिमवत्तनया
न हिमद्युतिर्न हिमशैलनदी।
हिमवत्सखो न हिमाद्रिवृषो
हरहृष्टये तव यशांसि यथा ॥ ३३ ॥

यथा त्वद्यशांसि हरस्य हर्षाय तथा न हिमालयाद्याः। भवद्यशोभिर्विश्वस्य पालनादिति भावः ॥ ३३ ॥

हृदयंगमं न जलजन्म विधेर्न
मधुद्विषो भुजगतल्परुचिः ।
स्फटिकाचले न च शिवो रमते
तव कीर्तिभिः स यदि सर्वगतः ॥ ३४ ॥

5 विधेर्ब्रह्मणः पुण्डरीकं हृद्यं न तथा ध्रुवं भवति । विष्णोश्च तथा शेषशय्याभिलाषो न भवति । कैलासशैले च तथा हरो न भवति । यदि यस्मादर्थे । स ब्रह्मा हरिर्हरो वा तव कीर्त्तिभिर्हेतुभिः सर्वगतो रमते । त्वत्कीर्त्तीः सर्वगता द्रष्टुं स भ्रमतीति पुण्डरीकादौ न रमते इत्यर्थः ॥ ३४ ॥

10 पृथिवी त्वया फलवती विहिता
क्रतुभिर्हि ते जलमुचो जलदाः ।
उपतिष्ठते हविरिनं ज्वलना-
त्परिपूर्यते द्विजपतिश्च ततः ॥ ३५ ॥

त्वया भूर्बहुफला सम्पादिता यतो यज्ञैर्हेतुभिर्मेघा वृष्टि-
15 ममुचन् । हविराहुतिरिनमादित्यमुपतिष्ठते । अग्नौ प्रास्ता-हुतिः सम्यगादित्यमुपतिष्ठते इत्यागमात् । ततश्चन्द्रश्च पूर्णो भवति ॥ ३५ ॥

उदरंभरिस्तव शिखी यजनैः
(सु)हृदः सुखान्मृदु वहत्यनलः ।

न विभाति खं न निगमध्वनिना
यजमानता न भवता न धृता ॥ ३६ ॥

त्वत्कर्तृ------------दरं बिभर्त्ति पोषयति ।
------ग्नेः सुखाद ----------मग्नब्देन खं
न न ---तेपि तु शोभते । भवता यजमानभावो न न
धृतः ॥ ३६ ॥

दू----------जंग
-----स्त्रिजगती प्रकृतीः ।
यदि ता भवानुपकरोति सदा
तदलं सुरैर्भवत एव नमः ॥ ३७ ॥

त्रिजगत्याः प्रकृतीरुपादानकारणानि सतीर्विभोः परमे-
श्वरस्य मूर्त्तीर्भूम्यादिका जगदुस्ता द----------
--भवान्नित्यं यदुपकरोति तत्किं सुरैः । न तान्नमस्यामः ।
तुभ्यमेव नमः ॥ ३७ ॥

-----------रितै-
र्विनमन्मुखश्चिरमभूद्वचनैः ।
न परीक्ष्यतां कथमसौ पृथिवी-
परिपा----------॥ ३८ ॥

-------------कम् ।

ब्राह्मणप्रोक्तैः पूर्वैर्वचनैः स्तवै — — — — — — — — — — —
तां यां पालयित्वा यमः श्रुतिं श्रवणमेति ॥ ३८ ॥

बहुभिर्गिरः किमतिविस्तरै-
--- नशे यममुना प्रमदम् ।
परितापिता दुहितृवेदनया
न तमन्वभूज्जयिनि दाशरथौ ॥ ३९ ॥

————केन किम् । अमुना राज्ञा हेतुना भूयं हर्षं प्रापत्तं भूर्जैतर्यपि रामे सति न प्रापत् ॥ रक्षःपति — — — तेन रामेण भुवः कथं न महान् हर्ष इत्याह । दुहितुः सीताया वेदनया संतापिता ॥ ३९ ॥

पुरुहूतता(मति)शयानममुं
विजयश्रिया स्वभुजसंभृतया ।
समुपस्थितः प्रणयदूततया
मधुरेकदा न(रप)तेः सचिवः ॥ ४० ॥

भुजबलजितया विजयलक्ष्म्या पुरुहूततामिन्द्रैश्वर्यं जितवन्तं राजानं कदाचि — — सामन्तो वसन्तस्तस्य सुखार्थं दूतभावेनोपस्थितः । सुखं त्वयानुभूयतामितीव प्रेरयितुं (व)सन्तः प्राप्त इत्यर्थः ॥ ४० ॥

प्रतियोगिभिर्मनसि मानभृतां
भयदायिभिः पथि पथि भ्रमताम् ।

(म)लयानिलैः सममिवानुचरै-
दिशमुत्तरामविशदुष्णकरः ॥ ४१ ॥

मानिनां प्रतिभटैर्माननिवारिभिरित्यर्थः । पांथानां चित्ते भयप्रदैर्मलयवायुभिरनुचरैरिव सह सूर्य उत्तरं दिशं
5 प्रविष्टः ॥ ४१ ॥

(शिशि?)रक्षणे पृथुरभूद्रजनी
मधुसौहृदात् किमपि कार्श्यमगात् ।
दिवसोष्मणि स्पृशति कर्कश(तां)
द्रवदङ्गका श्रमपयोभिरिव ॥ ४२ ॥

10 शिशिरे रात्रिर्दीर्घाभूत् । वसन्तसंगादत्यर्थं तनुत्वम-गच्छत् । अत्र हेतुः संभाव्यते । दिनतापे कार्कश्यं दधति घर्मजलैर्द्रवदङ्गीव ॥ ४२ ॥

मलयानिलात् पथिकनिश्वसितं
(मलयानिलः पथिकनिश्व)सितात् ।
15 इतरेतरं प्रववृधे सुतरां
घनतोऽर्णवा घन इवार्णवतः ॥ ४३ ॥

— — — — — — — — — — — — — — — — — — था

मलयवायोः पान्थनिश्वासस्तस्माच्च स वृद्धिं प्राप्तः । इतरेतर-मिति पंचम्यर्थेऽव्ययम् ॥ ४३ ॥

- - - - - - - - - - - - -

- - - - - - - - - - दद्दशे ।

कमपि ध्वनिं ध्वनितुमन्यभृताः

समु - - - - - - - - - - - ॥ ४४ ॥

5 — — — — — — — — — — — — — — — — — — —

घर्मजलं स्तिमितं व्यापकं मितं म — — — — — — — — —

— — — — — — ॥ ४४ ॥*

योथ तुहितम् । पूर्वं हिमं ततो रोध्ररेणुः । आदौ पान्थाः पश्चा — — — कार्श्यं प्रापुर्वसन्ते प्रथ — — — — — — ॥

10 क्षशराचयो (विकस)दिन्दुरुचो

गलिताम्बुदाः प्रसृतगन्धवहाः ।

प्रलपत्किपाः(?त्पिकाः) प्रमुदितभ्रमरा

मधुवासराः कमिव नामदयन् ॥

क्षशराद्यादिविशिष्टा वसन्तदिवसाः सर्वं लोकमतोषयन् ॥

15 हरवैरिणा धनुषि कुंडलिते

क्रियते न यद्विक्षतटाङ्कृतिनि ।

* After this there comes a lacuna extending to about 3 or 4 verses, in consequence of the breaking off of the lower part of a leaf.

नवकेसरे सरसमारसता
 मधुपेन तत्त्वरितमेव कृतम् ॥

भयावहटांकारे धनुषि कुंडलीकृते हरवैरिणा कामेन न यत् क्रियते कर्तुं न शक्यते तद्भ्रमरेण नववकुले रसेन
5 गायता तूर्णमेव कृतम् ॥

अरुदन्नु किं किमुत पर्यहस-
 न्नरटन्नु किं किमुत वान्वनयन् ।
प्रसृतस्वरा विदधिरे किमिति
 प्रतिपेदिरे विरहिभिर्न पिकाः ॥

10 प्रसृतोऽविच्छिन्नः स्वरो येषां ते पिका विरहिभिर्न निश्चिताः । पिकानां -- ने कारणं न निश्चयेन लब्धमित्यर्थः । तदेवाह । किं रुदितवन्तः पिकाः किं चक्रुः किं हसितवन्तः किमर --- वानुनीतवन्तः । रुदादीनां लङन्तत्वं युक्तमतो लटाद्यन्तत्वं चिन्त्यम् ॥

15 न चुचुम्बिरे न मधुपैः कलिकाः
 परिरेभिरे न तरुभिर्न लताः ।
विजगाहिरे न (दिवसैर्न?) दिशो
 न विलेभिरे न विरहिण्यसवः ॥

भ्रमरादिभिः कलिकादीनां चुम्बनादिकं न न कृतमपि

--तम् । कलिकाभ्रमरादीनां स्त्रीपुंसव्यवहारसमारोपाच्चुम्ब-
नाद्युक्तिसंगतिः ॥

अपि वासरे (प्रम)दनाहृदये-
ष्ववकाशहृत्प्रणयरोषरुजाम् ।
5 अतिमुक्तकः कुसुमकान्तिभरा-
ज्जितवान् विधोस्तु -- खल्वपदम् ॥

अतियुक्तकनामा तरुश्चन्द्रस्याकाममसव्यमजयत् । यत्पुष्प-
शोभातिशया -- स्त्रीचित्तेषुप्रणयरोषरोगाणां दिवाप्यवकाश-
हरः । चन्द्रो हि रज---------- ॥

10 ----नीमधुपगीत विधौ
सुरभिश्रियो मणिमयी रशना ।
ज-----------
----गोपिकवधूपरिषत् ॥

भ्रमराणां --------------------
15 कामस्य कटके जयघोष------------ ॥*

इति पृथ्वीराजविजये तृतीयः सर्गः ॥ ३ ॥

* The concluding portion of this canto together with the first few verses of the next are wanting, two leaves of the original MS being entirely missing.

## चतुर्थः सर्गः ॥

-- हा मदभृतोप्यवमन्यमाने ।
देवः स तार्क्ष्य इव वाजिनि वासुदेवो
हर्त्तव्यमृत्युमुखसंमुखदुष्टसत्त्वः ॥

5 स वासुदेवस्तेन भ्राचान्वितो निरगात् । कीदृशः । सुखा सुखावहा गतिर्यस्य तस्मिनश्वे निषण्ण —— स्ति नो जितवति । हर्त्तव्यानि मृत्युमुखानि संमुखं दुष्टसत्त्वानि येन सः । मृत्युमुखानीति दुष्टसत्व —————पः । यथा तार्क्ष्ये गरुडे निविष्टो वासुदेवो नारायणो निरगात् । नागाः 10 भुजगाः । दुष्टसत्त्वा दैत्याः । शोभना —— तिर्यस्येति च ॥

एतन्न कौतुकविधायकमादिदेवो
यद्यद्रिवासरुचिरेति किरातलीलाम् ।
चित्रीयते त्ववनधीरपि वासुदेवो
लीलाकिरातसरणिं स यदाललम्बे ॥

15 अद्रिवासे रुचिर्यस्य स आदिदेवो गिरिशो यत्किरातरूपमवहत्तन्नाश्चर्यम् । अद्रिस्थानां किरातरूपग्रहणोपपत्तेः ।

*, See footnote on the last page

इदं तु चित्रीयते। आश्चर्यं भवति। यन्न वने धौर्यस्य। अवने रक्षणे धौर्यस्येति च। स राजा लीलया किरातत्व-मग्रहीत्। चित्रट् आश्चर्ये इति क्रट्॥

सर्वा --- मृगजातिभिरैकमत्यं
5 निर्माय मानमवधीर्य पशुत्ववृत्त्या।
अग्रे विसृष्टमभयार्थितयेव रंह-
----- महरन्नृपतेस्तुरंगः॥

पशुभावेन मानं त्यक्त्वा साम्यत्वं कृत्वा सर्वाभिर्मृगजाति-भिरभया ---- प्रहितं सर्वस्वभूतं वेगं राजाश्वोऽहरदित्यु-
10 त्प्रेक्षा। अयमर्थः। राजाश्वं दृष्ट्वा मृगाणां वेगो नष्टः। ------ हृते। अभयाभिलाषाद्राजाश्वस्य मृगैः स्ववेगो दत्त इत्यर्थः। अवहदित्यार्षः पाठः॥

स प्राविशद्वन --------
--- केषु दधतीं सुखितोपविष्टम्।
15 उन्दालकाय परिपूर्णफलैर्विमुक्तैः
प्रा ------------ यूथम्॥

वनदेवतानां संगीतकेषु सत्सु निश्चलं सुखितया उपविष्टं मृगकुल --------- ष्टः। अतः संभाव्यते। प्राणानां संपूर्णफलत्वादुन्दालकाय प्रसाद -- थं त्यक्तैः प्र -------
20 प्राणो हि निश्चलो भवति॥

आकस्मिकं निपतितं परमान्नपात्रे
पाषाणखंडमिव ------- ।
------- णविघ्नमवाप्य वाजि-
कोलाहलं मृगकुलानि सुखान्यधुन्वन् ॥

------------------*

त्रा मृगाणां प्रसाद इव कृत इत्यर्थः ॥

नीलोत्पलभ्रमवशाद्भ्रमतामलीना-
मारादनूदितगतागतया दृशैव ।
उत्थानविघ्नजननीं श्रवणामृतौघे
10 मंक्त्वा स्थितां श्रवणशक्तिमिवोद्धरन्तः ॥

दृष्टौ नीलोत्पलमिति भ्रमतां भ्रमराणां गतागतानु-
वादिन्या गीतप्रियत्वादिति भावः । दृश्यैव श्रुतिशक्तिमिवो-
द्धरन्तः । श्रवणामृतप्रवाहे निमज्ज्य स्थितामुत्थाने विघ्नं कुर्व-
तीम् । आकर्णनामृते मग्नां श्रुतिशक्तिमुद्धर्तुमिव दृष्टिं व्यापा-
15 रयन्तीत्यर्थः । यश्च घटादिकं कूपादिकादुद्धरति स गता-
गतानि करोति ॥

तालोद्गमैः खुरपुटाहननेन भूमे-
र्ग्रैवेयगुञ्जितगुणेन च वाहनानाम् ।

* A lacuna of about 2 or 3 verses and com on them

वीक्ष्यास्यमात्रमपि किंपुरुषभ्रमेण
गन्तुं व्यलंबिषत मन्दभियः कुरंगाः ॥

भुवः खुरघातेन तालोच्चरणैरश्वानां ग्रीवालंकरणशब्देन चाश्वानां मुखमात्रदर्शने। गीतप्रियत्वेन दृशोनन्यव्यापारत्वं
5 हेतुः। गायतां मुखानि लोकाः पश्यन्तीति वस्तुस्थितिः। मुखमात्रदर्शनेन किन्नरभ्रान्त्या मन्दभया इव मृगाः ॥

नानाविधश्रुतिसुखाहृतशब्दसार-
सारंगमांसरसनाभ्यसनानुभावात्।
संक्रान्तगीतसमया इव सर्वगात्रे-
10 ष्वारेभिरे किमपि कर्णसुखं शबर्यः ॥

शबर्यः किरातवध्वः कर्णसुखं प्रारब्धवत्यः। नानाविधः श्रुतिसुखकारी आहृतः श्रुतः शब्दसारो यैस्ते सारङ्गमृगास्तेषां मांसस्य रसनं ग्रसनं तदभ्यासातिशयात्संक्रान्तः परिणतो गीतसमयो यासां ता इत्युत्प्रेक्षा ॥

15 व्याधांगनाभिरथवा वनदेवताभि-
र्यद्गीयते किमपि तच्चरितं मदीयम्।
किं हेतुकर्तृपदवीमिदमेति मृत्यो-
रित्येष भूपति(रदाद)भयं मृगेभ्यः ॥

किरातस्त्रीभिर्वनदेवताभिश्च किमपि लोकोत्तरं तत्
20 प्रसिद्धं मदीयं च ------ तन्मृत्योर्हेतुकर्तृत्वं किमेतीति स

मृगेभ्योऽदादभयम् । मद्गीतश्रवणश्रद्धयानपसरतां रणद्वारं स भूर्दित्यभयं ददावित्यर्थः ॥

प्राणावसानसमयेप्यप- - माने
दत्ता - - - - - - - - - ।
5 - - - - - - - - -

बुद्ध्या रदैः कमलपत्रधिया च जिह्वाम् ।
दूरावनम्रवदनोन्नमनक्रमात्त-
10 मातृस्तनान् न स जघान वराहशावान् ॥

दर्भांकुरेषु मृणालभ्रान्त्या हेतुभूतया । दर्भांकुरान् जिह्वया लिहतो जिह्वायां पद्मपत्रभ्रान्त्या । जिह्वां दशनैर्लिहतः दूरावनम्रैर्वदनैरुन्नमनात् क्रमेणात्ताः पीता मातृस्तना यैस्तान्वराहपोतान्स नावधीत् ॥

15 नैसर्गिकाविचलवर्णगुणस्य यत्न-
निष्पन्नवर्णगुणसंगमसुत्यजेन ।
दिग्वाससेव कृशशास्त्रमुखेन देवो
बाधां द्विजस्य शिखिनो विशिखेन नैच्छत् ॥

* Lacuna of about 3 or 4 verses and com

स्वाभाविकोऽविचलः स्थिरो वर्णगुणो नीलपीतादिर्यस्य द्विजस्य मयूरादेः पक्षिणो राजा बाधां नाकरोत् । केन । यत्नेन निष्पन्नो निष्पादितो यो वर्णो गुणसंगमस्तेन हेतुना सुत्यजेन विशिखेन । विगलिता लुञ्चिता शिखा केशा यस्य तेन । शिखिनश्चूडावतो द्विजस्य कश्चिद्बाधां नेच्छति । अविचलो वर्णो ब्राह्मणत्वं गुणः पाठादिश्च यस्य । यत्नेन निष्पन्नो वर्णगुणः पाठादिस्तेन सुत्यजः । क्षशं शास्त्रं यस्य तन्मुखं यस्य । अल्पशास्त्रज्ञेनेत्यर्थः ॥

**यत्पुण्डरीकमवधीत्तत एव चन्द्रा-**
**पीडोयमित्यधिजगाम यशः स राजा ।**
**दूरं गतस्तु मृगयाव्यसनेन चित्रं**
**कादम्बरीं न मनसापि कदाप्यपश्यत् ॥**

स राजा पुण्डरीकं व्याघ्रं मुनिपुत्रं च यदहिंसीत् ततोऽयं राजा चन्द्रापीड इति प्रसिद्धिमाप्तवान् । चन्द्रापीडो राजा पुण्डरीकं मुनिपुत्रं हतवान् अयं च पुण्डरीकं व्याघ्रं हतवानिति चन्द्रापीड इति प्रसिद्धिं प्रापत् । आखेटकव्यसनेन तु दूरं गतोऽपि मनसापि कादंबरीं मदिरां कादंबरीं नाम स्त्रियं च न लब्धवान् । चन्द्रापीडेन राज्ञा कादम्बरी लब्धा । अयं पुनश्चन्द्रापीडोऽपि भवन् कादम्बरीं न लब्धवानित्यर्थः ॥

सुप्तो हरिः क्वचन भूपतिना गुहा-
-- -- -- -- -- -- बभूवे।
दंष्ट्रानखप्रकरकेसरचन्द्रिकाया-
मुष्माणमात्मन इवाप ----॥

------------ प्तः सिंहो राज्ञा धनुर्गुण-
टंकारैराहतः। दंष्ट्रा च नखप्रकराश्च --------
---- जुहुवांबभूवे इति चिन्त्यम् -- -- ------॥*

10

मार्ष्टुम्

स्वतंत्रैः स्वेच्छाकल्पितैर्वचनैः स्वैरात्मीयैस्तन्त्रवचनैः कर्तृभि-
र्दुष्टसत्त्वः सिंहादिरल्पसत्त्वश्च -- षो महतां साम्यं यदि यत्नी-
येत। समर्थनायां लिट्। तेन साम्यनयनेन हेतुना स दुष्ट-
15 सत्त्वो महद्भ्यो ----- सहते। लभते इति वा पाठः।
तथाहि। माणवकत्वेन रूढमसमैः साम्यमेव मत्वं निवारयितुं
सिंहं सोऽवधीत्। सिंहो माणवक इति लक्षणाया उदाहरणं
प्रसिद्धम्। ततो राजैवमिवाचिन्तयत्। अहमपि बाल्ये माण-
वक एवासम्। अतो मम च सिंहेन साम्यं जातं यत्तन्मम

* A lacuna, of some 3 or 4 verses and com.

मत्तमतस्तन्माष्टुमहं --------- मीति सिंहो राज्ञा हतः ।
सिंहे हते सिंहसाम्यं न केचित्कथयन्तीत्यर्थः ॥

प्राप्नोति साधु(रुपमानतया) स्थितोऽपि
प्राणप्रयाणसमयेऽप्युपकारकत्वम् ।
5 श्रुत्वा कदाचन नृपेण हि गौरिवेति
प्राप्तः पुरोऽपि गवयो घृणया न जघ्ने ॥

उपमीयते येन तदुपमानम् । तद्भावेनापि स्थितः साधु-
र्मरणावसरेऽप्युपकारं करोति । तथा हि । यथा गौस्तथा
गवय इति पूर्वं श्रुत्वा पुरः प्राप्तोऽपि गवयो राज्ञा न हतः
10 कारुण्यात् ॥

पंचाननोहमभवं न ममाधुनास्ति
तत्पंचमं मुखमितीव भयाद्विधाचा ।
दिङ्नागचक्रमपि पादतले विधातुं
पादाष्टकप्रकटनात्परिपूरितेच्छम् ॥

15 भित्वा गते शरभमस्य शरे सुदूरम्
पुष्पांजलिर्गगनतो भुवि यः पपात ।
मन्ये स निर्वृतधिया दिवि राशिचक्र-
मध्यस्थितेन ----------॥

युगलकम् ॥

20 ------ महं पंचाननः पंचसंख्यमुखः सिंहस्य प्राग-

भवम् । अद्य तु मम – ------ पंचममुखस्य च्छेदात् ।
अतः पंचाननत्वमनेन गोपितमिति भ ------------ -
न्तुमिच्छा परिपूरिता यस्य तं कुतः । पादाष्टकनिर्माणात् ।
तं शर ------------ द्यः पुष्पांजलिः पपात स नूनं
5 हरिणा शि – वि ----------------- ॥*

-- ------------- तैः शून्यं स्वेच्छया
गृहीतं वरं वारणानां चक्रवालं यत्र तत् । स्वच्छन्दं चारिणः
शिखिनो मयूरा वल्क्यस्य । यत्र विहरन्तो मृगा यत्र राज्ञा-
भयदानादिति भावः ॥

10 आखेटिकाव्यसनिनो नृपतेर्विशेषा-
दायासिता इति गतैरतिमान्यभावम् ।
अश्वैरवापि यवसावसरश्चिरेण
सर्पैस्त्वरण्यसुर(ल?)भैः करभा ननन्दुः ॥

अश्वा मया खेदिता इत्याखेटिकासक्तस्य राज्ञोऽत्यर्थं
15 मान्यतां गतैरश्वैर्यवसेऽशनेऽवसरश्चिरेण प्राप्तः । वनसुलभैः सर्पै-
र्हेतुभिरुष्ट्रा ननन्दुः । उष्ट्राणां सर्पाशनत्वात् ॥

नित्यानिमेषनयनत्वमयं विपाकं
दुष्कर्मणां करभदर्शनतो विदित्वा ।

* Lacuna of 3 or 4 verses and com

पाणी पिधानपदवीमुपनीय काश्चिद्
द्रष्टुं नरेन्द्रमपि नापुररण्यदेव्यः ॥

नित्यं यदनिमेषात्त्वं तद्रूपं पापमुष्टदर्शनान्मत्वा प्रथम-
मस्माभिः करभो नूनं दृष्टो यतो निर्निमेषत्वमक्ष्णां जात-
5 मन्यथाक्षिनिमेषसुखं लभेत । उष्ट्रोऽदर्शनीय इति प्रसिद्धिः ।
अतो हस्तौ दृष्टेः पिधानत्वं नीत्वा वनदेवता राजानमपि
द्रष्टुं न प्रापुः ॥

वामेतरेण नयनेन च बाहुना च
कृत्वैकमत्यमिव नित्यमपि स्फुरद्भ्याम् ।
10 राजा निरुद्धनगरीगमनोद्यमोथ
प्रासादमुन्नतमकारयदप्यरण्यम् ॥

सामत्यमिव कृत्वाऽनवरतमेव कम्पमानाभ्यां दक्षिणाभ्यां
बाहुनेत्राभ्यामिव निरुद्धनगरीगमनोद्यमो यस्य स राजा वने
प्रासादमकारयत् । सुनिमित्तदर्शनात्तेन वने प्रासादः कृत
15 इत्यर्थः ॥

इन्द्रः करोति मम किं सति वासुदेवे
मुंचा ---- तमवश्यममुष्य भाग्यैः ।
भावी वनेऽपि लवणांबुनिधिर्ममेति
प्रालेयशैलसुतमास्पदतामिवाप्तम् ॥

आत्ता मया हरिणजात्यभयप्रतिज्ञा
क्रीडाकिरातभयमप्यपसारयामि ।
–नस्य तद्विधुमृगस्य नभोवनेऽस्मिन्
दत्वेति निर्मितमिवातिशयेन तुंगम् ॥

5 वासुदेवे राज्ञि नाराय – – – ति – – – करोत्य – –
– – – – – – – वासुदेवस्य भाग्यैर्वनमध्ये – – – – – – – –
– – – – – – – – – – – – – – – – – – – – – – – – – – – – – –
– – – – – – – – – – – ॥*

– – – – – – – – – – – – – – – – – – – – – – – – – – – – –

10 र्हि कम्पते । स्यात्प्रासादो वैजयन्त इत्यमरः ॥

स्थानस्य तस्य महिमानमसौ विदित्वा
तत्र प्रवेशमपरस्य निषिध्य देवः ।
द्विवाण्यहान्यनुबभूव महेभरामा-
वैधव्यभीतिभिषणं मृगयाविनोदम् ॥

15 तस्य प्र(? प्रा)साद्स्य माहात्म्यं ज्ञात्वाऽन्यस्य तत्र प्रवेशं रुध्वा स राजा महेभरामाणां हस्तिनीनां वैधव्यभीतेर्भिषणं निवारकमाखेटकं व्यधात् । एकाक्येव वने सोऽवसदित्यर्थः ॥

* A lacuna of about 8 lines or so

मध्याह्नमात्रमतिवाह्य मृगेन्द्रमुक्त-
मुक्तावलीसिकतिलासु वनस्थलीषु ।
स प्राविशद्धवलवेश्म तुषारशैल-
भ्रान्त्येव शीतलतया विहिताधिवासम् ॥

5 सिंहमुक्तमुक्तासहितासु वनभूमिषु मध्याह्नमतिवाह्य स धवलप्रासादं प्रविष्टवान् । हिमाद्रिरिति भ्रान्त्येव शैत्येन कृतस्थानम् ।

द्वारान्त एव विनिवारितवारणौघं
घर्माम्बुशेकरकरम्बितहारदामा ।
10 स्वाम्यन्तराश्रयणदूषणहीनभाग्य-
मात्रानुगः स शयनीयगृहं विवेश ॥

घर्माम्बुमिश्रितहारमौक्तिकः स द्वारान्त एव निरुद्धहस्तिकं शय्यागृहं प्राविशत् । स्वाम्यन्तराश्रयणेन दूषणं निन्दा तेन हीनानि भाग्यमात्राण्येवानुगा यस्य सः ॥ चा — — घमिति वा
15 पाठः ॥

इतः प्रभृति तं वीक्ष्य भूपतिरित्यन्तं (p. 106, l. 6) कुलकम् ॥

उद्विग्नमत्यवनताद्वनमध्यतल्पा-
दारुह्य तुङ्गतममास्पदमाप्तनिद्रम् ।
नारायणं स्वयमिवैक्षत सेव्यमानं
20 गूढं श्रिया स्वशयनीयगतं कथंचित् ॥

अब्धिवासेनोद्विग्नमतोऽयवनताज्जलमध्यशयनात् प्रासादं आरुह्य लब्धनिद्रं स्वयं नारायणं गूढमलक्ष्यया लक्ष्म्या सेव्यमानमिवेत्युत्प्रेक्षा । कंचित्पुरुषं स दृष्टवान् ॥

आसूचिताम्बुधरजङ्गमचन्द्रशाला-
5 वातायनक्षणिकशक्रशरासनाभिः ।
दत्तद्युयानपरिखिन्ननिषण्णशक्र-
शंका ------ धितिभिर्विभान्तम् ॥

अम्बुधरा एव जंगमचन्द्रशालावातायनानि तेषु क्षणिकमिन्द्रचापं आसूचि --------। तथा द्युयानेनाकाश-
10 गमनेन --- स्येन्द्रस्य शङ्का दत्ता याभिस्ताभिर्भूषणदीप्तिभिः शोभ --------- ॥*

-----------------

---- द्वरं मुक्ताहारं धारयन्तम् । अतः संभाव्यते कान्त्यातिशयानुरक्तया नाकलक्ष्म्या निजकण्ठादवरुह्य दत्तं
15 तारामयभूषणम् ॥

हारान्तरालगतनायकपद्मराग-
व्याजेन बिभ्रतमिवानुगतं ग्रहोच्चैः ॥
केनापि कारणलवेन गतं द्युवीथीं
भूमेरुपा(य)नकृते स्वतनूजमेव ॥

* A lacuna of about 3 or 4 verses and com

हारमध्यस्थितस्य नायकभूतस्य पद्मरागस्य व्याजेन भूमेः स्वतनूजमेव भौममेव बिभ्रतम् । कीदृशं । संग्रहगणं भूमेर्मातुः सकाशाद्युमार्गमारूढम् । कुत इत्याह । केनापि कारणांशेनोपायनार्थम् । भूम्या दिवो हर्षणार्थं भौम एव विसृष्ट इत्यर्थः ॥

5 केयूरयोः कटकयोश्च निवेशितानाम्
ज्योतिर्भरैरुभयपार्श्वगतैर्मणीनाम् ।
निर्विघ्नमन्दरगतागतसिद्धिहेतोः
सन्दर्भयन्तमिव चित्रशिखण्डिभावम् ॥

अंगदयोर्वलययोर्विषययोः स्थापितानां रत्नानां पार्श्वद्वयगै
10 रश्मिभिर्हेतुभिर्निर्निरोधमाकाशगतागतार्थं चित्रस्य शिखण्डिनो मयूरस्य सप्तर्षीणां च भावं प्रकाशयितुम् ॥

संवर्धमानमृगदावरतेर्नरेन्द्रा-
दुन्मोचनीयमखिलं भवता कुलं मे ।
भूत्वा द्विधेभ्रमिव कुण्डलकान्तिभङ्ग्या
15 कर्णद्वये गुहशिखण्डिभृतोच्यमानम् ।

अतिमृगयाव्यसनाद्राज्ञो मदंशस्त्वया रक्ष्य — — कुण्डलद्वयस्य व्याजाद्रूपद्वयं कृ — — — — यूरेण कर्णद्व — — — — — नम् ॥

व्यो(मप्रया)णसुलभश्रमया मुखेन्दुं
संस्पृश्य लब्धरसया च सलज्जया च ।
चूडामणेरसितया निशयेव भासा
संबध्यमानदृढनिद्रमुषर्मुखेऽपि ॥

5 प्रभातेऽपि (निशया ?) संबध्यमाना दृढा निद्रा यस्मिं-
स्तमित्युत्प्रेक्षा । विषयिण्या निशाया संभावने विषयमाह ।
चूडामणेरसितया दीप्त्येति । निशायाः कथं तत्र निद्रेत्याह ।
व्योम्नि प्रयाणे सुलभः श्रमः खेदो यया । तथा मुखचन्द्रं
स्पृष्ट्वा लब्धशृंगाररसया च सलज्जया च । उषर्मुखेपीत्युषः-
10 शब्दो रेफान्तः प्रायो न दृष्टः ॥

पुष्पस्रजाममरलोकभुवामुपास-
मारब्धवद्भिरलिभिर्मधुरं ध्वनद्भिः ।
विद्याधरोयमिति कैश्चन मूर्त्तिमद्भि-
र्विद्याक्षरैरिव समाश्रितयाचिकत्वम् ॥

15 नाकोत्पन्नानां पुष्पमालानां सेवां कुर्वद्भिर्यतो मधुरं
ध्वनद्भिर्भ्रमरैर्हेतुभिरेष विद्याधरो भवतीति हेतुना मूर्त्तै-
र्विद्याक्षरैरिवाश्रितं याचिकत्वं यस्य ॥

द्रष्टव्यदर्शनमयं फलमाप्तकाल-
माहर्त्तुमीक्षणयुगं मनुजेश्वरस्य ।

आनंदबाष्पजलनामनि सिद्धतीर्थे
शुद्धिं नयन्तमिव तत्समयावतीर्णे ॥

प्राप्तकालं द्रष्टव्यस्य दर्शनरूपं फलं निर्मातुं* तत्कालजाते हर्षाश्रुतीर्थे राज्ञो नेत्रद्वयं शुद्धिं प्रापयन्तम । तीर्थस्नानाद्धि
5 प्राप्तव्यं लभ्यते ॥

तं वीक्ष्य भूपतिरचिन्तयदेष ताव-
दस्वप्नतां व्यभिचरत्यथ शेषशायी ।
देवो यमेतदपि नास्ति स दृश्यते यै-
स्तेषां भवंति न हि दिव्यदृशां विकल्पाः ॥

10 राजैवं (अ)चिन्तयत् । एष पुरुषोऽस्वप्नतां देवत्वं व्यभिचरति । देवा हि निद्रारहिताः । अस्वप्नतां व्यभिचरति सुप्त इति च । देवोऽपि हरिः स्वपतीत्याह । अथ शेषशायी देवो हरिरयमित्येतदपि नास्ति यतो यैः स हरिर्दृश्यते तेषां दिव्यदृशां सतां विकल्पः कुतः । सुप्तत्वाच्छेषशायीति
15 विकल्पः ॥

गन्धर्वसिद्धगणकिन्नरलक्षणानि
नात्रासते न च मनुष्यविशेषमेनम् ।
संभावयामि न च वैश्रवणस्य योऽपि
धर्त्तुं नरः स्पृशति सोऽपि ममोपधानम् ॥

* Emended into निरूपयितुं in the margin

गन्धर्वादीनां लक्षणानि नास्मिन्वर्तन्ते। न चैनं विशिष्टं मनुष्यं संभावयामि अहम्। कुबेरस्य यो वहनभूतो नरः सोऽपि मम - - - - - - - - - - - ॥

नागोऽपि नायमुरगत्वविभिन्नयापि
5　　मूर्त्या न हि व्य(भिच)रन्त्यहयः फणित्वम्।
लोभस्वभावमलिना खलु जातिरेषा
　　रत्नं वराकधनवद्विजहाति नाङ्गात्॥

उरगत्वात्पुच्छादिमत्वाद्विभिन्नयापि मूर्त्या मूर्त्यन्तरेणापि अयं न नागः। तथा हि। नागाः फणां न त्यजंति।
10 हेत्वन्तरमप्याह। एषा जातिर्नागजातिर्लुब्धा स्वांगाद्रत्नं न त्यजति। अतो वराकधनवदित्युपमा। उरगत्वविभिन्नया मूर्त्या मूर्त्यन्तरेणापि नागाः फणित्वं न व्यभिचरन्तीति योज्यम्॥

विद्याधरत्वमपि यत् किल पादलेप-
15　　कौक्षेयकाञ्जनमलचयकल्मषं स्यात्।
तत्तावदस्य न भवत्यथ यः प्रकार-
　　स्तुर्यस्तदस्य मुखदर्शनतो वधास्ये॥

पादलेपखड्गाञ्जनमलचयेण कल्मषं यद्विद्याधरत्वमपि स्यात्तदप्यस्य न तावद्भविष्यति अथ यो विद्याधराणां चतुर्थः

प्रकारस्तमप्यस्य मुखदर्शनात् करिष्यामि निश्चेष्यामि। विचष्टे इति पाठ आर्षः ॥

ध्यात्वेति सान्ध्यशतपत्त्रसगोत्रमास्यं
व्यात्तं मनागवलुलोकयिषोस्तदीयम्।
5 उर्वीपतेर्गगनसागरकेलिनावा
लीनं तले गुलिकया चरणांगुलीनाम् ॥

सान्ध्यं किंचिद्विकसितं यच्छतपत्त्रं पद्मं तस्य सगोत्रं सदृशं मनाग् व्यात्तं विकसितं तदीयमास्यं द्रष्टुकामस्य (?) राज्ञः पादतले गुलिकया लीनम्। भावे क्तः। गगनमेव 10 सागरस्तत्र केल्यर्थं नावा। गुलिकाविद्याधरा गुलिकाप्रभावाद्व्योम्न्युड्डयन्ते ॥

संस्पृष्टमात्रचरणश्च तया स दध्यौ
भूयोऽपि शेखरमणिः प्रतिभावनानाम्।
त्वं संदिहानमिव मानस मा स्म भूर्मे
15 विद्याधरोऽयमिति तेऽस्तु दृढा प्रतीतिः ॥

तया गुलिकया स्पृष्टपाद एव स प्राज्ञानामग्रणीः पुनरपि चिंतितवान्। हे मानस। त्वं कर्तृ। संदिहानं संदेहवन्मा स्म भूः। अतोऽयं पुरुषो विद्याधर एवेति निश्चयस्तवास्तु ॥

इन्द्रादिपूजितगरिष्ठदृढप्रभाव-
20 बाणावलीप्रसवनर्मदया मदीये।

अस्मादवश्यमनया वदनेन्दुबिम्बा-
न्निर्गत्य विंध्य इव केलिगृहे निपेते ॥

इन्द्रादिभिः पूजिता दृढा ये प्रभावास्त एव बाणास्त-
त्यंक्त्याः प्रसव उत्पादने नर्मदया नद्या विन्ध्यपातिन्या । नर्म-
5 दाया हि बाणाः प्रभवन्तीति प्रसिद्धिः । अनया गुलिकयाऽस्य
विद्याधरस्य मुखचन्द्रान्निर्गत्य विन्ध्यसमे मदीये लीलावासे
पतितम् ॥

एवं विकल्पयति भूभुजि भूभुजिष्या-
स्वेच्छाप्रकाश्यरमणीयपदार्थसार्थे ।
10 विद्याधरः स बुबुधे (बुबुधे च व)क्त्रा-
द्भ्रंशं सिद्धगुलिकेति ससंभ्रमश्च ॥

भूरेव भुजिष्या दासी तया स्वेच्छया यथेच्छं प्रकाश्या
रमणीयाः पदार्थसार्था यस्य तस्मिन्राजनि एवं विकल्पान्
कुर्वति सति विद्याधरः प्रबुद्धः । मन्मुखाद्गुलिका पतितेति च
15 ज्ञातवान् । संभ्रान्तश्चाभूत् ॥

भूपालतिग्मरुचिपादनिरोहितायां
तस्यां मनःकुमुदशाश्वतचन्द्रिकायाम् ।
कष्टं नभश्चरशशी स्फुटलक्ष्यमाण-
शंकाकलंकमतिपांडु मुखं बभार ॥

20 नभश्चरो विद्याधर एव शशी मुखं स्फुटं लक्ष्यमाणः

शंकाकलंको यस्य तद्वहत् । यतोतिपांडुरम् । कष्टं खेदे । कदा । तन्मन एव कुमुदं तस्य नित्यज्योत्स्नायां गुलिकायां राजा एव सूर्यस्तत्पादेन च्छादितायां सत्याम् । रविपाद-च्छादितायां ज्योत्स्नायां सत्यां चन्द्रो दृश्यकलंकं मुखमग्रिम-
5 भागं वहति ॥

शून्याशयस्य वहतो वदनं विरूपं
सन्त्येव तस्थुरिव नास्य विभूषणानि ।
विच्छायतामुपगते तुहिनांशुबिम्बे
व्योम्नि स्थितान्यपि हि नैव विभान्त्युडूनि ॥

10 शून्यहृदयत्वाद्विच्छायं मुखं दधतोऽस्य वर्त्तमानान्यपि भूषणानि न तस्थुरिव । चन्द्रे म्लाने व्योमस्थान्यप्युडूनि नैव शोभन्ते ॥

उत्तिष्ठता धरणिपालमनेन दृष्ट्वा
व्रीडाभराद्वनताननतामवाप्य ।
15 ऊर्ध्वं गतेरवसरः सकलः समाप्त
इत्याशयेन वसुधेव परीक्ष्यते स्म ॥

शयनादुत्तिष्ठता विद्याधरेण राजानं दृष्ट्वा लज्जाभरा-न्नतमुखत्वं प्राप्याकाशगमनार्थं सकलः कालो गत इति भावेन भूरीक्षिता ॥

वाक्छक्तिमेव सकलामपि तस्य हृत्वा
निःसंशयं गुलिकया निरगामि वक्रात् ।
वीक्ष्याननं नरपतेरनुरुध्यमानः
किंचिद्विवक्षुरपि यन्न किमप्युवाच ॥

5 नूनं सर्वामप्युक्तिशक्तिं हृत्वा अस्य मुखाद्गुलिकया निर्गलितम् । राज्ञो मुखं दृष्ट्वा सानुरोधः स यतः किंचिदपि वक्तुकामः किमपि नावदत् ॥

मन्येऽनुभूय गुलिकाचिरसाहचर्यं
याता क्व सेति सहसैव गवेषणाय ।
10 भाग्यानलप्रशमभस्मकणायमानै-
र्दन्तांशुभिः प्रसृतमस्य मुखाद्विवक्षोः ॥

वक्तुकामस्य विद्याधरस्य मुखाद्दन्तांशुभिः प्रसृतम् । भावे क्तः । अतः संभाव्यते गुलिकया सह चिरं स्थितिमनुभूय गुलिकाया गवेषणायान्वेषणार्थं सा गुलिका क्व गतेति । 15 कीदृशैः । भाग्यान्येवानलः तस्य प्रशमेन भस्मकणसदृशैः । यद्वा यात्यपेक्षया भवतेः पूर्वकालत्वम् ॥

यो मानमात्रकधनः स किमन्यतोऽपि
स्वप्नेऽपि नाम शृणुयादवमान्यवाक्यम् ।
अभ्यासखंडनभयादिव मानितायां-
20 स्तस्यावमानवचनं श्रवणं ह्यपथ्यम् ॥

यो मानैकधनः सोऽन्यस्मादपि स्वप्नेप्यवमानवचनं किं शृणुयात् । अपि शब्दात्स्वस्यौ(? स्या)वमानं किं शृणुयादित्यर्थः । तस्य मानिनो मानिभावस्य योऽभ्यासस्तत्खण्डनभीत्येवावमानवचःश्रवणं ध्रुवमपथ्यमयुक्तम् ॥

5 पृथ्वीपतिर्यदवनम्रमुखं विवक्षुं
तं वीक्ष्य भीत इव मा स्म मुखादमुष्मात् ।
कार्पण्यगौरमृतदीधितिबिम्बमध्या-
दुल्केव निष्पतदिति त्वरितं बभाषे ॥

अवमानश्रवणाभावमुदाहरति । यद्यस्मात्तं विद्याधरं नम्र-
10 मुखं वक्तुकामं दृष्ट्वा भीत इव स राजा विद्याधरस्य मुखादमुष्मादनर्हात्कृपणवाक् चंद्रमंडलादुल्केव मास्म पतदित्यतस्तूर्णं भाषितवान् ॥

मान्येन घर्मविवशेन तथान्तरिक्षा-
देत्यान्वभूयत सुषुप्तदशाप्रवेशः ।
15 एषा यथा सकलमंगलकोशमुद्रा
याता न सिद्धगुलिकैव न यामिकत्वम् ॥

मान्येन विद्याधरेण तापाकुलेनाकाशादेत्य स्वापस्तथानुभूतः यथा मंगलमेव कोशस्तस्य मुद्रेयं सिद्धगुलिकैव यामिकत्वं न न प्रापदपि तु प्रापत् । एवं राज्ञा गुलिकायाः
20 प्रकाशनं कृतम् ॥

एतावतेव नृपतेर्वचनामृतेन
संपूर्णकर्णकुहरस्य नभश्चरस्य ।
राहोर्मुखादिव विनिर्गतमिन्दुबिम्बं
तत्कालमेव ददृशे मुखमन्यदेव ॥

5 इयन्मात्रेणैव राज्ञो वाक्यामृतेन पूरितकर्णस्य विद्याधरस्य मुखमन्यदेव तत्कालमेव दृष्टम् । अतो राहुमुखान्निर्गतं चन्द्रबिम्बमिव ॥

आदाय तां क्षितिपतेश्च सुधांशुलेखा-
मम्भोनिधेरिव स खेचरचक्रवर्ती ।
10 प्रारम्भचर्वितविषादविषावतीर्णां
पीडां विधूय परमेश्वरतामवाप ॥

समुद्रादिव राज्ञश्चन्द्रलेखामिव तां गुलिकां गृहीत्वा प्रथममनुभूताद्विषादविषादवतीर्णां प्रथमदुःखजातां पीडां त्यक्त्वा स दिविषदग्रणीः परमेश्वरभावं विद्याधरत्वं प्रापत् ।
15 विषपीडां त्यक्त्वा परमेश्वरश्च समुद्रादिन्दुलेखामग्रहीत् ॥

राजानमित्थमवदच्च महानुभाव
भावत्कमध्यवसितं मुनयो न विद्युः ।
विद्याधराधिपतितां पतितां पुरस्ता-
त्पादयोरपि तृणाय न मन्यसे स्म ॥

स राजानमित्यवदत् । हे महानुभाव मुनयो निस्पृहा अपि त्वदीयमध्यवसितमौदार्यं न जानीयुः । त्वत्पादयोरग्रे पतितामपि विद्याधरचक्रवर्तितां त्वं तृणायापि नामंस्थाः ॥

दग्धोऽपि लोचनमुखेन महेश्वरस्य
5 कामं विवेश हृदयं पुनरेव कामः ।
एकं तु तस्य भवदाशयमात्रमेव
मन्ये महीमिहिर दुर्ग्रहदुर्ग--म् ॥

दृष्टिपथेन दग्धोऽपि कामो मन्मथो लोभस्य महेश्वरस्य चित्तं पुनरविशत् । हे महीमिहिर भूमिसूर्य कामस्यैकमेव
10 त्वच्चित्तमात्रमेव दुग्रहं दुर्गमस्ति । भवच्चित्ते एव कामो न वर्तत इत्यर्थः ॥

कामानुयातमरिपंचकमन्यदाहु-
स्तस्मिञ्जिते तदपि ते पुरतो वराकम् ।
प्राणाहुतीकृतवतो जलधिं महर्षे-
15 र्नक्रादयः क गणनास्पदतामवापुः ॥

जना अन्यदरिपंचकं क्रोधादिकं कामानुयातं काममनुसरदाहुः । क्रोधादीनामग्रणीः काम इत्यर्थः । तस्मिन्कामेऽभिलाषे जिते सति ते तव पुरस्तत्क्रोधादिपंचकं वराकमकिंचित्करम् । अगस्त्यस्य समुद्रं पिबतो नक्रादयः जलजंतवः
20 क गणनीयाः ॥

तत्किं ब्रवीम्युपचिकीर्षति मानसं मे
त्वां प्रत्यपीति धिगनीतिविदुक्तिरेषा।
प्राप्योपमन्युमुनिना किलदुग्धसिन्धुं
क्षीराभिषेककलशेन मुनिः (? शिवः) प्रसाद्यः॥

5 त्वं यतो जितलोभस्तत् किं ब्रवीमि। जल्पितुमहमशक्त इत्यर्थः। मम चित्तं तवोपकर्त्तुमिच्छतीत्येषाऽनीतिज्ञानामुक्तिः। शिवात्क्षीरसमुद्रं प्राप्योपमन्युना कर्त्रा शिवः किं प्रसाद्यः उपकर्तव्यः। यद्वा। यत्त्वां प्रत्युपचिकीर्षति मे चित्तमित्येषाऽनीतिविदुक्तिः। वक्तुं नोचितमित्यर्थः। प्रत्युपकारं मह्यं
10 न करोतीत्याशंकायामाह। उपमन्युना क्षीराब्धिदोपि शिवः क्षीरकलशेन किल प्रसादनीयः॥

स्वोपकारस्य हीनतां प्रकटयितुमाह।

चिन्तामणेः कनकमध्यनिवेशनं यत्
कल्पद्रुमस्य यदि वा जलसेकचिन्ता।
15 यत्नप्रवृत्तिरुत वा सुरभेस्तृणानाम्
या स्यादुदात्तहृदयानुपकर्तुमिच्छा॥

यदुदारचेतसामुपकर्त्तुमिच्छा तच्चिन्तारत्नस्य सुवर्णमध्ये स्थापनं। तथा कल्पवृक्षस्य जलसेकः। तथा कामधेनोस्तृणानां प्रवर्तने यत्नारम्भः। वाक्यार्थरूपकम्॥

सद्भिस्तदप्युपकृतादपि कश्चिदंशः
स्वीकार्य एव लघुताशमनाय तस्य ।
नाग्राहि विश्वभयदे किमु कालकूट-
व्याधौ हृते शशिकलाप्युदधेर्मृडेन ॥

5 यद्यप्युदाराश्रयाणां प्रत्युपकारार्थमसामर्थ्यं तथापि तस्योप-
कर्तर्यस्यालाघवार्थं कश्चिद्भागः कृतोपकारात्स्वीकार्यो ग्राह्यः ।
विश्वभयधायिनि कालकूटव्याधौ वारिते सति शिवेन समुद्रा-
चन्द्रस्य कलापि न किं गृहीता ॥

एवं स्थिते किमपि यत्कथयामि नाम
10 तत्कार्यमेव भवता मदनुग्रहाय ।
धामत्रयीनयनभासितसर्वलोकः
किं चंद्रमौलिरपि नेच्छति दीपदानम् ॥

कृतोपकारात् प्रत्युपकारो ग्राह्य एवं स्थिते सति यदहं
वदामि तन्मम प्रसादार्थं त्वया कार्यमेव । धामत्रयीयुक्तैर्नयनैः
15 प्रकाशितसमस्तभुवनश्चन्द्रमौलिरपि दीपदानं किं न कांक्षति ॥

आकर्णयेदमनवद्यमते मदुक्तं
विद्याधरः प्रसवितास्ति शकम्भरो मे ।
अस्यामरण्यभुवि तस्य ययौ तपोभि-
र्देवी हिमाद्रितनया नयनातिथित्वम् ॥

हेनवद्यमते निरहंकारबुद्धे इदं मद्वचः शृणु त्वम् । शाक-भराख्यो मम पिताचारण्यभूमावस्ति । तस्य तपोभिर्हेतुभिरत्र देवी गौरी दृग्गोचरत्वं प्रापत् ॥

शाकंभरीति च पितुर्मम कीर्त्तिहेतो-
5 र्नाम स्वयं वरदया सदयं तयात्तम् ।
भागीरथीति हि पदं सुरनिर्झरिण्यः
पुण्यानि शंसति पृथूनि भगीरथस्य ॥

सदयं मम पितुः कीर्त्तिहेतोर्वरदया गौर्या स्वयमेव शाकम्भरीति नाम गृहीतम् । गंगाया भागीरथीति नाम
10 भगीरथस्य पुण्यानि बहूनि सूचयति ॥

किं भूयसा सततसंनिहितामरण्ये
तामत्र मज्जनयितुर्विदधुस्तपांसि ।
विद्याधरेन्द्रनगरादतिसर्वकालं
तद्दर्शनाय करवाणि गतागतानि ॥

15 बहुनोक्तेन किम् । मत्पितुस्तपांसि देवीमत्रारण्ये नित्य-सन्निहितां चक्रुः । अतिसर्वकालं जातु जातु तस्या दर्शनाय विद्याधरनगराद्गमनान्यागमनानि च करवाणि ॥

देवीप्रसादफलमद्य मयानवद्यं
पर्याप्तमाप्तमनवाप्तचरं पुरस्तात् ।

नानुग्रहानभिमुखीषु हि देवतासु
युष्मादृशो नयनगोचरमापतन्ति ॥

पूर्वमनवाप्तचरं देवीप्रसादफलं निर्दोषं सपूर्णं पुरः प्राप्तम् । त्वद्दर्शनप्राप्तिरेव देवीप्रसाद इत्यर्थः । देवतास्वेव प्रसादपरासु 5 त्वादृशां दर्शनं लभ्यत इत्यर्थः ॥

तद्वाहिनीं प्रहिणु यामवतीक्षणेच
कुन्तं निवेश्य भुवि पृष्ठमवेक्षमाणः ।
आरुह्य वाजिनमथ व्रज राजधानी-
मेतावतीमुपकृतिं कुरु मेऽद्वितीयाम् ॥

10 तत्तस्माद्धेतोस्त्वं सेनां विसृज । त्वं रात्रिक्षणे कुन्तमायुधविशेषं निधायाश्वमारुह्य पश्चात्प्रदेशमपश्यन्राजधानीं गच्छेतौ(?त्ये)तावतीमप्रतिमल्लामुपकृतिं कुरु मे ॥

उक्त्वेत्यदृश्यपदवीमुपयाति तस्मिन्
विश्वंभरापरिवृढः प्रजिघाय सैन्यम् ।
15 दृष्ट्वा कुलस्य परमभ्युदयं कृतार्थो
देवः स्वयं द्युमणिरस्तमयं प्रपेदे ॥

एवमुक्त्वा तस्मिंस्तिरोहिते सति स भूपतिः सेनां व्यसृजत् । स्वकुलस्य महान्तमुदयं दृष्ट्वा कृतार्थः सन्निव सूर्यो लोकान्तरमगात् ॥

भूमिं प्रविष्टवति कुन्त इवाथ भास्व-
त्युच्चैस्तरां लवणसिंधुरुदच्छलद्यत् ।
तत्रास्ति कारणलवो न हि कश्चिदन्यो
राज्ञः प्रभावमहिमा स समस्त एव ॥

5 यथा कुन्ते तथा भास्वति भूमिं प्रविष्टवति सत्युच्चैस्तरां क्षारसमुद्रो यदुच्छलितवांस्तत्रान्यो हेत्वंशो न विद्यते । स सर्व एव राज्ञश्चन्द्रस्य ------स्य प्रभावः ॥

अत्यद्भुतं किमपि कुंतमुखेन कर्म
निर्मातुमुत्कलिकयेव तरंगितस्य ।
10 वा------पृथिवीपुरुहूतबाह्वो-
रन्यैव काचिदुदपादि तदाऽऽस्फुरत्ता ॥

कुन्तेन किमप्यद्भुतं कर्मनिर्मातुमुत्कण्ठयेव व्याप्तस्य -- ---- लोकोत्तरास्फुरत्ता कम्पो जातः । उदपादीति कर्तरि लुङ् ॥

15 वातायनादवततार ततस्तताभि
स्तत्काल आभरणदीप्तिभिरुक्तमार्गः ।
स्वैरेव लक्षणगणैर्निज एव तेज-
स्युद्दीपिताभिरिव मंगलदीपिकाभिः ॥

ततः स राजा वातायनादवतीर्णस्तस्मिन् काले आभरण-

दीप्तिभिर्दर्शितमार्गः राज्ञा निजैरेव लक्षणैर्निज एव तेजसि ज्वलिताभिर्मंगलदीपिकाभिरिवेत्युत्प्रेक्षा ॥

आयानरत्नकिरणैः कचदाननाग्रं
द्वाराग्रतो झटिति वाडवमारुरोह ।
5 सप्तार्णवीप्रसभपानपरेण धाम्ना
कामं तले लवणसिन्धुरिपुं गृहीतम् ॥

आयाने वल्गायां रत्नांशुभिर्दीप्यमानमुखं हयं स द्वारा-दारुरोह । सप्तसमुद्राणां प्रसभं पाने परेण तेजसा हेतुना राज्ञा तले गृहीतं नूनं लवणार्णवारिं वाडवाग्निम् ॥

10 किं भूरिभिः किमिति नाच निधिं प्रहृषे
लावण्यसारमसि( ? पि, यि ) धात्रि तमेकमेव ।
इच्छापि येन न भवत्यपरेष्वितीव
कुंतेन भूमिमथ भूमिधरो बिभेद ॥

बहुभिः किम् । हे धात्रि येन करणभूतेनान्येषु निधि-
15 ष्विच्छापि न भवति तमेकमेव ला(व)ण्येन चारेण च प्रधानं निधिं किमिति न प्रकाशयसीतीव राजा कुन्तेन भूमिं भिन्नवान् ॥

नासापुटाननभुवो भुवनत्रयस्य
संबंधिनः सममिव भ्रमतः समीरान् ।

स्पर्धावशादनुगतेन ततो हयेन
प्रातिष्ठत प्रजविना नरलोकपालः ॥

नासापुटाभ्यामाननाच्च भूर्येषां तांस्त्रिभुवनस्य संबंधिन इव
समं भ्रमतो वायून् स्पर्धावशादिवानुगच्छता वेगवताश्वेन स
5 राजा प्रस्थानमकरोत् ॥

मध्येतमो रजसि दूरमुदस्यमाने
रत्नांशुभिर्हरिरराजत सत्वराशिः ।
द्रष्टा विमुक्तविकृतिप्रकृतिर्विशुद्धं
स्वं पौरुषं दधदशोभत वासुदेवः ॥

10 तमसो मध्ये मध्येतमः । अंधकारमध्ये रजस्युदस्यमाने
उत्थाप्यमाने रत्नरश्मिभिर्हरिर्हयोऽशोभत । सत्वस्य बलस्य
राशिः तथा वासुदेवोऽशोभत । कीदृक् । द्रष्टा पश्यन् । तथा
विमुक्तविकृतिः प्रकृतिर्यस्य । तथा स्वं पौरुषं दधानः । तथा
सत्वराशिधैर्यस्थानम् । अथ च हरि ------- तमोगुणे
15 ------ सत्वगुणस्य --------- निर्विकारप्रकृतिः वासु-
देवस्य ॥

चन्द्रोदये गगनचुंबितया स्थितत्वाद्-
दृष्ट्वा हयं जविनमात्मसुतभ्रमेण ॥
पश्चादिवागतवतो जलधेः समीपे
20 कल्लोलशब्दमवनीरमणो न्यशामत् ॥

चन्द्रोदये पश्चादागतवतो लवणसिन्धोस्तरंगशब्दं स राजा-
शृणोत् । आगमने हेतुरुत्प्रेच्यते । वेगवंतं वाजिनं दृष्ट्वात्मसुत
उच्चैःश्रवा इति भ्रमेण । भ्रमः कुतो जात इत्याह । आकाश-
व्यापित्वेन स्थितत्वात् ।

5 तेन स्मरन्नपि वचः स नभश्चरस्य
कौतूहलेन बहलेन गृहीतकर्णः ॥
व्यावृत्तदृष्टिरनुगत्वरमैक्षत स्वं
पानीयतामिव यशो गतमब्धिमध्यात् ॥

तेन तरङ्गशब्देन घनेन गृहीतकर्णः श्रुतशब्द इत्यर्थः ।
10 भवता कुन्तं भूमौ निवेश्य पृष्ठं न विलोकनीयमिति विद्या-
धरस्य वचः स्मरन्नपि कौतुकेन निवर्त्तितदृष्टिः स राजा
समुद्रनित्यनिवासाज्जलरूपतां प्राप्तं स्वमिव यशो दृष्टवान् ॥

यावत्किमेतदिति विस्मयवारिशय्या-
नारायणत्वमधिरोहति तावदेव ।
15 विद्याधरः स पुनरेव नरेश्वरं त-
मित्थं जगाद गगनार्णवकर्णधारः ॥

गगनार्णवे कर्णधारो नाविको व्योम्नि संचरन्स विद्याधरस्तं
राजानमेवं तावदवोचत् । एष नादः किं संपन्न इति विस्मय
एव वारिशय्या तत्र नारायणत्वं यावदाश्रयति । साश्चर्य

इत्यर्थः। वर्तमानसामीप्ये इति लट्। अन्यस्य यावज्जले मज्जति तावत्कर्णधारः प्राप्नोति॥

अक्रोधकुन्तकरणक्षतमोदमान-
पृथ्वीपुरंध्रिघनघर्मजलायमाना।
5 क्षेमंकरी रणधुरासुहृदां हयानां
राजन्नियं लवणसिन्धुरवातरत्ते॥

अक्रोधं कोमलतया कुन्तकरणेन क्षतं घातस्तेन मोदमाना तुष्यन्ती पृथ्वी एव पुरंध्रिस्तस्या घनघर्मजलवदाचरन्ती युद्ध-भारोद्वाहिनां तवाश्वानां हितेयं लवणसिंधुरवतीर्णा। नखक्षते
10 च वनिताया घर्मजलोद्भेदः॥

यन्नाम किंचन पतिष्यति वस्तुजातं
क्षारत्वमेष्यति तदत्र समस्तमेव।
तेनाचरिष्यति न केवलमेव कीर्त्ति-
र्यावत्प्रतापदहनस्य तवानुवृत्तिम्॥

15 यत्किंचन स्वादु कटुकादिवस्तुजातमिह लवणसमुद्रे पति-ष्यति तत्सर्वं कटु। क्षारत्वं लवणत्वमेति यत् तेन हेतुना न केवल त्वत्कीर्त्तेरेवायं लवणाम्भा अनुवृत्तिं करोति। तत्कीर्त्तिं शृण्वतामन्ये वृत्तान्ताः क्षारा इत्यर्थः। यावत्प्रतापाग्नेरप्ययं लवण - - अनुवृत्तिं करोति। दाह - - - - कीर्तेरतिमाधुर्या-
20 दन्येषां वृत्तांताः क्षारा इवेत्यर्थः॥

इन्दोः कुलस्य यशसां वसतिः कुरूणां
क्षेत्रं पवित्रयति योजन - - - - ।
लोकान्तरे फलति तत्फलवाननेन
लोकद्वयेऽपि भविता सवितुस्तु वंशः ॥

5 इंदोः कुलस्य - - - स्थानां कुरूणां - - न्विनां यशसां वसतिस्थानं यत्क्षेत्रं कर्ष्टं । योजनपंचकपरिमाणं लोकं पवित्रयति तल्लोकान्तरफलं द - - । तुः पक्षान्तरे । अनेनापरिमाणेनेत्यर्थः । लवणसमुद्रेण तु सूर्यस्य कुलं सूर्यवंश्या राजानो लोकद्वये फलवन्तो भवन्ति । अयमर्थः । कुरुक्षेत्रमृताः कुरवः 10 स्वर्गमात्रं लब्धवन्तः । सूर्यवंश्यानां तु लवणाब्धा इह परत्र च फलप्रदः ॥

तदेव लोकद्वयफलज्ञानं दर्शयति ।

यः पूर्वपुंभिरुदखन्यत तावकीनै-
रेकोऽपि तृप्तिमुपयाति न वाडवोऽस्मात् ॥
15 प्रीतिं विधातुमखिलेष्वपि (वाडवे?)षु
जातस्त्वदन्वयभुवां लवणाकरोयम् ॥

त्वदीयैः पूर्वपुरुषैः सगरैर्यः समुद्रः प्रागुत्खातस्तस्मादेकोऽपि वाडवो वडवाग्निर्न तृप्तिमेति । त्वत्कुलजातानां संबंधिषु वाडवेषु अन्येषु तृप्तिं कर्त्तुमयं त्वत्खातो लवणसमुद्रो 20 जातः ॥

आशापुरीति नृपते कुलदेवता ते
शाकंभरी भगवती च मयि प्रसन्ना ॥
एते द्युसिन्धुयमुने इव सर्वकालं
रक्षिष्यतो लवणवारिनिधिं मिलित्वा ॥

राजन्नाशापुरी नाम देवी तव कुलदेवता भवति। शाकंभरी देवी च मयि प्रसन्ना भवति। एते गंगायमुने इव मिलित्वा लवणाब्धिं रक्षिष्यतः ॥

आविर्भविष्यति विना भवदन्ववाय-
मन्यस्य कस्यचन नैष रसो नृपस्य।
10 औवाग्निधूमभवमब्दगणं हि हित्वा
पातुं न कोऽपि तृषितः क्षमते पयोधौ ॥

भवत्कुलं विनान्यस्य कस्यापि राज्ञोऽयं लवणाम्भा न प्रकटीभविष्यति। संभावनायां लृट्। वाडवधूमजातं मेघकुलं त्यक्त्वा को नु तृषितः समुद्रे पातुं समर्थः। हित्वेति क्त्वा-
15 प्रत्यय* - - - - - - - - - - - - - - - - ॥

किं भूमया स्फटिकशैल इवाष्टमूर्त्ति-
शिक्षाबलेन परिकल्पिततोयमूर्त्तिः।

* The text is here left blank even in the original MS., which indicates that our MS. was probably a copy from another MS., also incomplete or injured

अभ्यागतश्चरणयोस्तलमद्य यस्याः
शाकंभरीति गिरिजा तव सेयमग्रे॥

बहुनोक्तेन किम्। अष्टमूर्त्तेः सकाशाच्छिवासंप्रदायस्त-
द्बलेन परिकल्पितजलरूपस्फटिकाद्रिरिव यस्याः पादतल-
5 मागतोद्य सेयं शाकंभरी देवी तवाग्रे वर्तते। अष्टमूर्त्तिरिति
साभिप्रायः॥

एतां प्रणम्य शिवशेखरचन्द्ररेखा-
मन्दाकिनीशिशिरपादयुगामिदानीम्।
निर्वापिताध्वगमनक्लमसन्निपातः
10 पृथ्वीपुरन्दर पवित्रय राजधानीम्॥

शिवस्य शेखरीभूते ये चन्द्रलेखामन्दाकिन्यौ तदत्ताभ्या-
मिव तापहरपादद्वयामेतां गौरीं प्रणम्य शमितमार्गतापज्व-
रस्त्वं राजधानीं गच्छ॥

उक्तेति विस्मयसुधारसवर्षमेघो
15 बद्धांजलिः प्रति---------।
राजापि तूर्णमवरुह्य हयादयासीत्
------------क्षकत्वम्॥

विस्मय एव सुधारसस्तस्य वर्षे मेघः. स विद्याधर इत्युक्त्वा

बद्धांजलिः सन्प्रत्यमुञ्चत्। राजा च सद्योऽश्वादवरुह्याचम्य सलिलस्य परीचामकरोत्। पुण्यं प्राप्तवान्पानादिनेत्यर्थः॥

अथ शिवशिरश्चन्द्रज्योत्स्नाललाटविलोचन-
ज्वलनसततप्रत्यासत्तिप्रभावकवोष्णयोः।
5 उपचितयशस्तेजाः शाकंभरीचरणाब्जयो-
रनतिनिकटे नीत्वा रात्रिं प्रगे नगरीमगात्॥

शिवस्य शिरसि चन्द्रज्योत्स्ना तथा ललाटे विलोचनाग्निः। तयोर्नित्यं प्रत्यासत्तिस्तत्प्रभावेन कवोष्णयोः। शिवो नित्यं शाकम्भरीं प्रणमतीत्यर्थः। शाकम्भरीपादयोरनतिसमीपे 10 रात्रिमुषित्वा राजा। उपचिते यशस्तेजसी यस्य स तथा सन् प्रातर्नगरीं गतः। यशस्तेजसोरुपचये कवोष्णदेवीपादतलवासः सम्भावित इति भद्रम्॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन चतुर्थसर्गम्।
15 दुर्गं सुबोधमकरोदिह जोनराजः
पृथ्वीमहेन्द्रविजयाभिधकाव्यराजे॥१॥

पृथ्वीराजविजये चतुर्थः सर्गः समाप्तः॥४॥

## पञ्चमः सर्गः ॥

लवणाकरमाकर्ण्य स्ववंश्येनावतारितम् ।
रथाश्वनामिव प्रीत्यै सप्ताश्वो द्रुतमाययौ ॥ १ ॥

स्ववंश्येन वासुदेवेनावतारितमुत्पादितं लवणसमुद्रं श्लेवाश्वा(नां प्री)त्यर्थमिव सप्ताश्वः सूर्यो द्रुतमुदितः ॥ १ ॥

5 शापं दशरथोप्यापदर्कवंश्यो मृगव्यया ।
अवाप्तानुग्रहो राजा स पुनः प्राविशत्पुरीम् ॥ २ ॥

सूर्यवंश्यो दशरथोऽपि आखेटिकया शापं प्रापत् । स तु राजा सूर्यवंश्यो मृगव्यया लब्धप्रसादो नगरीमविशत् ॥ २ ॥

शाकंभरीप्रदेशे यदुदगुस्तस्य कीर्तयः ।
10. अतो नोद्वेगमाजग्मुः पुलिने लवणोदधेः ॥ ३ ॥

शाकंभरीप्रदेशो मरुभूमिलात्साारः । तत्र यत्तस्य यशांसि जातान्यतः चाराब्धितटे तानि नोद्वेगमागतानि । चाररससात्म्यत्वादिति भावः ॥ ३ ॥

लवणांभोनिधेः स्वामी क्षीरांभोधिनिवासिनः ।
15 क्रमात्स वासुदेवस्य वासुदेवोन्तिकं ययौ ॥ ४ ॥

चीराब्धिवासिनो वासुदेवस्य निकटं स वासुदेवो राजा गतः । लवणांभोधेः स्वामीति समीपगमनौचित्यार्थम् ॥ ४ ॥

भुवं शाकंभरीदेव्या सनाथां यदुपासते ।
तद्वंश्याः तेज भण्यन्ते सर्वे शाकंभरीश्वराः ॥ ५ ॥

शाकंभरीपालितां भूमिं वासुदेवकुलजा यत्सेवन्ते ततः शाकंभरीश्वराः कथ्यन्ते ॥ ५ ॥

5 उत्तुंगैः - - - भास्वन्मित्रैरहितवर्जितैः ।
राजचन्द्रैरनन्ता भूः समराजि महोत्सवैः ॥ ६ ॥

तै राजचन्द्रैरनन्ता भूमिर्न - - - - - - - - - - - - - - - - त्यर्थः । महान्त उत्सवा येषां तैः । उत्तुङ्गैरुदारैः । भास्वन्ति दीप्राणि(नि) मित्राणि शत्रुरहितैः ॥ सर्वपदाश्रयः पुनरुक्ता-
10 भासः । उत्तुङ्गादीनां सर्वेषां पदानामामुखे पुनरुक्तत्वात् ॥ ६ ॥

जज्ञे तदन्वयोदन्वत्सुधांशुर्वसुधापतिः ।
सामन्तराजः सामन्तराजिकैरविणीरविः ॥ ७ ॥

वासुदेववंशसमुद्रचन्द्रो मंडलेश्वरपंक्तिकुमुदिनीसूर्यः साम-न्तराजा नामा - - ॥ छेकानुप्रासः । छेकाः पक्षिविशेषाः ।
15 तद्वाग्गुपलक्षितोनुप्रासः । दन्व - - - ¹ - - - कानामावृत्तेः ॥ ७ ॥

सुषुवे जयराजं तं राजन्तं स जयश्रिया ।
यं वीक्ष्याजौ विवस्वन्तं (वस्वन्तं प्रा।)प राजकम् ॥ ८ ॥

विवस्वन्तं सूर्यसमं यं दृष्ट्वा रणे राजगणश्चन्द्रगणश्च वस्वन्तं

तेजोनाशं प्राप तं जयलक्ष्म्या शोभमानं जयराजनामानं पुत्रं स प्रापत् ॥ यमकम् । तुल्यरूपयोः समुदाययो रावृत्तेः ॥ ८ ॥

**नितान्तमुन्नतिमतो नेतुमानतिमातताम् ।**
**तेने तेन न तान्नेतुमुन्नतिं मानिना मतिः ॥ ९ ॥**

5 तेन मानिना जयराजेनोन्नतिमत उद्धतान्नतिं नेतुं नमयितुं तथा नतान् प्रणमत उन्नतिं नेतुं वर्धयितुं नितान्तं मतिः कृता ॥ त्र्यक्षरो वृत्तानुप्रासः । नकारतकारमकाराणां त्रयाणामावृत्तेः ॥ ९ ॥

**नतेनतेतेनतेन तेन तेन नतेन ते ।**
10 **नते नते तेन तेन तेनते न नते नते ॥ १० ॥**
**इति स्तुतं कविवरैर्मुख्यं सर्वमहस्विनाम् ।**
**प्राप विग्रहराजं स ग्रहराजमिवात्मजम् ॥ ११ ॥**

युग्लम् ॥

नतेति निष्ठान्तं स्त्रीलिङ्गं प्रथमैकवचनं क्रियापदम् ।
15 इनतेति कर्मपदम् । इतेनतेनेति कर्त्तुर्विशेषणम् । तेन तेनेति कर्त्तृपदम् । नतेनेति च कर्त्तृविशेषणम् । ते इति लच्छब्दस्य जसन्तस्य रूपम् । इति पूर्वार्धे पदविभागः । नते नते इति सप्तम्येकवचनान्तं पदद्वयम् । तेन तेनेति च तृतीयान्तम् । तेनते इति द्विवचनान्तं कर्तृपदम् । नेत्यव्ययम् । नते नते
20 इति द्विवचनान्तं पदद्वयम् । तेन तेन पुरुषेण कर्त्रा ते

तवसंबंधिनी इनता ऐश्वर्यं नता । सर्वैस्त्वदैश्वर्यप्रणामः कृतः । इति प्रथमार्धं व्याख्येयम् । तेन ते कर्त्र्यौ नते नते न भवतः । उन्नते उन्नते भवत इत्यर्थः । ता लक्ष्मीः । इनता स्वाम्यम् । कस्मिन् । तेन तेन हेतुना नते नते प्रणामं
5 कुर्वंति पुरुषे ॥ सर्वतोभद्रम् । चित्रमिदं खड्गादिसंनिवेशहेतु-वर्ण ---- ॥ १० ॥ ---- न्द्रैः स्तुतं सर्वतेजस्विषु प्रधान-ग्रहराजं सूर्यमिव स राजा विग्रहराजाख्यं पुत्र प्रापत् ॥ ११ ॥

**यस्य खड्गाद्विनिर्गत्य गंगयेव हरेः पदात् ।**
**कीर्त्त्या त्रैलोक्यपावन्या लंघिता गिरिसागराः ॥१२॥**

10 विष्णोः पदादिव यस्य खड्गाद्विनिर्गत्य गङ्गयेव त्रिभुवन-पावन्या कीर्त्त्या पर्वतसमुद्रा लंघिताः ॥ १२ ॥

**दूरस्थाप्यरिवक्त्रेषु बभौ यत्खड्गकालिका ।**
**कलंकश्यामिका चान्द्री शतपत्रवनेष्विव ॥ १३ ॥**

यत्खड्गस्येव कालिका शत्रुमुखेषु बभूव । कदाचित् सैव
15 स्यादित्याह दूरस्थापि । दूरादेव प्रतापभयात्पलायमानानां द्विषां मुखकांतिर्हीनाऽतः संभाव्यते खड्गश्यामिकेव लग्नेति । केव । पद्मवनेषु चान्द्री कलंकश्यामिकेव ॥ उपमा-त्रयम् । सर्वमहस्विनां मुख्यानामिति (verse 11) साधारण-धर्मस्य सद्भावात् । उपमानभूतेन ग्रहराजेनापि साधारणं
20 धर्मस्योपमेयवत् संबंधात् । खड्गपादयोः (verse 12) बिंबप्रति-

विंबभावात् । कालिकाश्यामिकयोः (verse 13) पर्यायनिर्देशात् ॥ १३ ॥

**यशोभिर्यस्य वर्षान्ते दुर्यशोभिश्च वैरिणाम् ।**
**मिलितैर्हंसकादम्बैरिव दिद्युतिरे दिवः ॥ १४ ॥**

5 वर्षाणामन्ते मिलितैर्हंसैः काकैश्च यथा दिशः शोभन्ते तथा तद्यशोभिः शत्रुदुर्यशोभिश्च दिशः शोभन्ते ॥ समुच्चयोपमा । हंसकाकानां यशोपयशसां च सम -- दिशां द्योतनात् ॥ १४ ॥

**तनयश्चन्द्रराजोस्य चंद्रराज इवाभवत् ॥**
**संग्रहं यः सुवृत्तानां सुवृत्तानामिव व्यधात् ॥ १५ ॥**

10 चन्द्रराजाख्यः । चन्द्रो ग्रंथकारः । स इवास्य पुत्रश्चन्द्रराजाख्योभवत् । शोभमानानां वृत्तानां वसन्ततिलकादीनामिव सुवृत्तानां सदाचाराणां पुरुषाणां यः संग्रहमकरोत् ॥ श्लेषमिश्रोनन्वयः । चन्द्रराजस्य चन्द्रराजेनैव सुवृत्तानां सुवृत्तैरेवोपमानात् । तेनैवोपमानलेऽनन्वयस्य सद्भावात् प्राकरणिका-
15 प्राकरणिकं न विचार्यम् ॥ १५ ॥

**सर्वभूतोपयोगित्वात् सर्वथा हृदयंगमा ।**
**क्षमेव दयिता तस्य दयितेव क्षमाऽभवत् ॥ १६ ॥**

उपकारपरत्वेन सर्वभूतानामुपयोगित्वात् सर्वथा मनोहरा दयिता दयावत्त्वं प्रिया च क्षमेव भूरिव क्षान्तिरिव साभूत् ।

क्षमा दयितेवाभवत् ॥ श्लेषमिश्रैवोपमेयोपमा । क्षमादयितयो रन्योन्यमुपमेयोपमानत्वात् । तस्याश्च परस्परमुपमानोपमेयत्व-लक्षणत्वात् ॥ १६ ॥

तस्य गोपेन्द्रराजोभूदनुजो यो मनीषिणाम् ।
5 गोपेन्द्रराजस्मृतिकृद्गोमंडलधृतेः - - ॥ १७ ॥

गोपेन्द्रराजाख्यस्तस्यानुजोभूत् । यो गोमडलस्य भूवलयस्य धेनुवर्गस्य रश्मिचक्रस्य वा धृतेर्धारणाद्गोपेन्द्रनामराज्ञश्चन्द्रस्य च स्मारयिताभूत् ॥ श्लेषेण स्मरणम् । गोधारणेन कृष्णेन्दुसमस्य राज्ञोऽनुभावात्कृष्णचन्द्रस्मरणम् ॥ १७ ॥

10 ततो दुर्लभराजेन चन्द्रराजस्य सूनुना ।
विनोदकेन गमिता वृद्धिं कीर्त्तिलता भुवि ॥ १८ ॥

चन्द्रराजपुत्रेण दुर्लभराजेन विनोदकेन प्रजादुःखहारिणा कीर्त्तिरेव लता भुवि वर्धिता ॥ उदकेन विना लतावर्धना-त्प्रतीयमानविरोधः । निरङ्गरूपकम् । भिन्नयोरेव सामा-
15 नाधिकरण्येन निर्देशे रूपकसद्भावात् । निरङ्गं कीर्तौ लता-रोपस्यारोपान्तरनिरपेक्षत्वात् ॥ १८ ॥

यस्य कैरविणी व्योम्नि पृथिव्यां तारकावली ।
पाताले चंद्रिकाकीर्त्तिः कं न चक्रे सविस्मयम् ॥ १९ ॥

आकाशे कुमुदिनी तथा भूमौ तारापंक्तिस्तथा पाताले

ज्योत्स्ना यस्य कीर्त्तिः सर्वजनं साश्चर्यमकरोत्॥ निरङ्गं मालारूपकम्। एकस्मिन्विषयेऽनेकेषामारोप्यमाणत्वात्। निरङ्गं चारोपान्तरनिरपेक्षत्वात्॥ १९॥

**अम्भिः स्नातोत्थितो यस्य गङ्गासागरसंगमे।**
5 **चिरं गौडरसास्वादशुद्धो ब्राह्मणतां ययौ॥ २०॥**

गंगासागरसंगमे पूर्वं स्नातोऽनंतरमुत्थितो यस्यासिर्गौडानां जानपदविशेषाणां रसाया भूमेरास्वादे शुद्धो तत्र ब्राह्मणस्य भावं प्राप्तः। गौडरसो गुडसंबंधी रसश्च। यद्वा शुद्धोप्रधानो ब्राह्मण इति॥ केवलं श्लिष्टं परंपरितम्। खड्गे ब्राह्मणारोप-
10 स्यान्यारोपं गौडरसं प्रति सापेक्षत्वात्॥ २०॥

**प्रजापतिपदब्रह्मा षाड्गुण्यपुरुषोत्तमः।**
**सुतो गोविन्दराजोस्य शक्तित्रयमहेश्वरः॥ २१॥**

प्रजापतिपदं राज्यं स्रष्टृत्वं च तत्र ब्रह्मा। षड्गुणाः संधिविग्रहादयो ज्ञानादयश्च तेषु पुरुषोत्तमो विष्णुः। शक्तयः
15 प्रभुत्वादय इच्छादयश्च तत्र महेश्वरः॥ मालारूपकं तदेव। ब्रह्मशब्दादीनामारोपाणां प्रजापत्यादीनारोपान्प्रति सापेक्षत्वात्परंपरितम्॥ २१॥

**नयन्मन्मथमुल्लासमात्मभूतः शिवस्य च।**
**द्वितीयश्चन्द्रराजोभूत् ततोऽरिध्वांतचन्द्रमाः॥ २२॥**

रूपयौवनाद्युल्लासात्काममुल्लासं प्रापयन् भक्तिभराच्छिव-स्यात्मभूतः सन्नुतिमिरेन्दुर्द्वितीयश्चन्द्रराजाख्योभूत् ॥ केवल-मश्लिष्टं परंपरितम् । चन्द्रारोपस्य ध्वांतारोपे सापेक्ष-त्वात् ॥ २१ ॥

5 **सर्वराजार्कजीमुतः सर्वदिग्वल्लरीमधुः ।**
**गोवाकस्तत्सुतः सर्वद्वीपमण्डलयामिकः ॥ २३ ॥**

सर्वे राजान एवार्कास्तेषां जीमूतः । सर्वदिश एव वल्लर्य-स्तासां मधुर्वसन्तः । सर्वद्वीपा एव मंडलं तत्र यामिकः ॥ मालारूपकं परंपरितम् । एकस्मिन्ननेकेषामारोप्यमाणत्वा-
10 न्मालारूपकम् । परस्परसापेक्षारोपत्वात्परंपरितम् ॥ २२ ॥

**उपायवेदसर्वज्ञो गुणषट्कर्मपारगः ।**
**राजर्षिरेष मंत्राङ्गशिखिपंचकमध्यभाक् ॥ २४ ॥**

उपायाः सामादयः । त एव वेदास्तेषु सर्वज्ञः । गुणाः सन्ध्यादय एव षट्कर्माण्यध्यापनादीनि तेषां पारगः । मंत्रा-
15 ङ्गानि कर्मणामारम्भोपाय इत्यादीनि एव शिखिनोऽग्नयस्तेषां पंचकं तन्मध्यभाक् एष राजर्षिरभूत् ॥ प्रकृतोपयोगि । राजर्षि-विशेषानुगुण्यात् ॥ २४ ॥

**प्रतापतापनोपास्तिप्राप्तकीर्त्तिकलागमः ।**
**कृपाणकृष्णशा(सा)रेण पूर्णो राजा रराज यः ॥ २५ ॥**

20 कृपाण एव कृष्णशा(सा)रस्तेन पूर्णो यो राजा रराज ।

कीदृक् । प्रताप एव तापनः सूर्यस्तस्योपास्तिरुपायनं तया प्राप्तः कीर्त्तिकलागमो येन सः । राजा चन्द्रश्च तपनसेवया प्राप्तकलागमो मृगांकश्च भवति ॥ श्लिष्टमेकदेशविवर्त्ति । अर्थविशेषारोपत्वादेकदेशविवर्त्ति । श्लिष्टं तु राजशब्दस्योभय-
5 वाचित्वात् ॥ २५ ॥

मलस्य मानससरो विकारस्य पयोर्णवः ।
अव्याप्तेर्गगनं यस्य यशः कैर्नाम लंघ्यते ॥ २६ ॥

मलस्य मालिन्यस्य मानससरः । यद्यशो निर्मलमित्यर्थः । तथा विकारस्य क्षीरसमुद्रः । निर्विकारमित्यर्थः । अव्याप्तेर्ग-
10 गनं । व्यापकमित्यर्थः । यस्य यशः कैर्लंघ्यते । आरोप्यमाणानां मानसादीनामलंघ्यत्वादुक्तिसंगतिः । वैधर्म्येण निरंगं मालारूपकम् । मलादीन्प्रति मानसादीनां प्रतिकूलत्वाद्वैधर्म्यम् ॥ २६ ॥

अयशोमेघशरदा दुरितध्वान्तराकया ।
15 यस्य श्रिया प्रमादाहिहेमन्तनिशया जितम् ॥ २७ ॥

यस्य श्रिया जितमिति भावे क्तः । अयश एव मेघस्तस्य शरदा । तथा पापांधकारपौर्णमास्या । तथा प्रमादसर्पस्य हेमन्तरात्र्या । शीतकाले सर्पाणां बिलप्रवेशनादर्शनाद्धेमन्तनिशारूपकम् ॥ परंपरितं तदेव । मेघादीन् प्रति शरदा-
20 दीनां प्रातिकूल्यात् ॥ २७ ॥

समुद्राः स्थिरलावण्याः परकर्णभिदोऽर्जुनाः ।
यशसां राशयो यस्य दिवि बद्धपदा ध्रुवाः ॥ २८ ॥

स्थिरं लावण्यं लालित्यं च येषां । अम्ब्रगुणैरान्तीति च । परेषां शत्रूणां कर्णं श्रवणं । परं शत्रुं कर्णं राधेयं च 5 भिन्दन्ति । अर्जुनाः श्वेताः पांडवविशेषश्च । दिवि नाके व्योम्नि च कृतस्थितयो ध्रुवा दृढास्ताराविशेषश्च । अर्जुना ध्रुवा इति बहुवचनं विषयाणां प्रत्येकमारोपात् ॥ आविष्ट-लिंगं रूपकम् ॥ १८ ॥

पुण्डरीकं विरिंचस्य श्वेतद्वीपं (मधु) द्विषः ।
10 चंद्रापी - - - - - - शम्भुद्रमवहन् मनः ॥ २९ ॥

ब्रह्मादीनां पद्मादि यच्चित्तमधारयत् । तत्र तेषां नित्य-निवासात् ॥ परिणामः ॥ १९ ॥

तेजोबलाद्वा(दशभि) - - - महद्दायिभिः ।
भूपैरभ्यर्थ्यमानत्वे स्वसारं यः कलावतीम् ॥ ३० ॥
15 चन्द्रमूर्तिभ्रमकरीं मुखलक्ष्म्येव संज्ञया ।
कान्यकुब्जमहेशाय सरस्वानिव दत्तवान् ॥ ३१ ॥

युगुलम् ॥

तेजस्विलात्सूर्यसमैर्द्वादशभिर्भूपालैर्याच्यमानत्वेऽपि कला-वतीं कलावतीनामानं चतुष्षष्टिकलासहितां च स्वसारं यः 20 कान्यकुब्जेन्द्राय दत्तवान् । मुखकान्त्या कलावतीति संज्ञया

च चन्द्रभ्रान्तिकरीम् । सरस्वानिव गांभीर्यात्समुद्रसमः । सरस्वांश्चेश्वराय चन्द्रलेखां ददौ ॥ भ्रांतिमान् । कलावतीति वचनेन भ्रांतिजननात् ॥ ३० ॥ ३१ ॥

**जितैः प्रदत्तसर्वस्वः स्वस्वे द्वादशभिर्नृपैः ।**
**5 यमो धनपतिर्वायं संदेहमिति यो दधौ ॥ ३२ ॥**

युद्धे जितै राजभिर्हेतुभिः स्वस्वे प्रदत्तं सर्वस्वं येन स यो राजा किं यमः किं वा वैश्रवण इति संदेहं दत्तवान् । राज्ञां पीडनाद्यमः । अतिदानाद्धनदः । शुद्धः संदेहः । सन्देहे एव पर्यवसानात् ॥ ३२ ॥

**10 नंदनश्चन्दनस्तस्य यस्य नामन्युदीरिते ।**
**जनः सफल इत्युक्तिशेषाद्वृक्षभ्रमं जहौ ॥ ३३ ॥**

चन्दन इति यस्य नामन्युक्ते सति तरुसंदेहं प्राप्नुवंल्लोकः ततः सफल इत्युक्तिशेषाद्वृक्षभ्रममत्यजत् । चंदनवृक्षस्य फलानामनुत्पत्तेः । निश्चयान्तः । प्रथमं संशये सति निश्चयस्य 15 पर्यवसानात् ॥ ३३ ॥

**फलदश्चंदनो दृष्टो भोगिनो यमुपासते ।**
**सत्कलास्ते च तेषां च विषदं वदनं सदा ॥ ३४ ॥**
**इत्यादि वर्णनं यस्य मिलत्संदेहनिश्चयम् ।**
**न वृक्षः कल्पवृक्षोयमित्युक्त्वावेति संगतिम् ॥ ३५ ॥**
20 युगलम् ॥

चंदन इत्युक्ते संशयः। फलद इत्युक्ते निश्चयः। चंदनस्य फलदत्वाभावात्। भोगिनः सुखिनस्तु यं सेवन्ते इति सन्देहः। ते च भोगिनः सत्कुलाः विद्यमानश्रुतयः सहृदयाश्चेति निश्चयः। तेषां भोगिनां मुखं विषदं प्रसन्नं विषोद्गारकं चेति संदेहः॥ निश्चयगर्भः। प्रथमं संदेहः। मध्ये निश्चयः। पश्चात् संदेहः॥ ३४॥ संशयनिश्चयसंकीर्णं यस्यैवं वर्णनं संगति-मेति। संगच्छते। कदा। अयं राजा वृक्षो न भवति। किं तर्हि। कल्पवृक्षो भवतीत्युक्तौ सत्याम्। कल्पवृक्षे पूर्वोक्तस्य सफलत्वादेर्विशेषणजातस्य संभवात्॥ निश्चयान्तः संदेहः। अन्तनिश्चयस्य लाभात्॥ ३५॥

**बभार न स राजत्वं राजराजत्वमेव तत्।**
**अन्यथा निधयः सर्वे कथमायत्ततां ययुः॥ ३६॥**

इतरराजवत् स राजा राजत्वं नावहत्। किन्तु तत्तस्य राजत्वं राजराजत्वमेव भवति। राज्ञां राजा राजराजः वैश्रवणस्य। अन्यथा यदि स राजराजो न - - - - - - निधयस्तस्यायत्ततां जग्मुः। - - . - - जस्यैवनिधि - - त्। प्रथमापह्नुतिः। विषयस्य निषेधेऽन्यस्य विधानात्। निषेधपूर्व-मारोपात्॥ ३६॥

**रुद्राणी तद्वधुर्दीपसहस्रं तमसो भिदे।**
**न पुष्करतटे लिंगसहस्रं तददीदिपत्॥ ३७॥**

रुद्राणी नामा तदधः पुष्करतटे तमोहरणार्थं तद्दीप-सहस्रमज्वलयत् । न पुनस्तल्लिंगसहस्रमज्वलयत् ॥ द्वितीया-पह्नुतिः । आरोपपूर्वकं निषेधस्य: सद्भावात् ॥ ३७ ॥

योगिन्यात्मप्रभाख्यासावणिमाद्यष्टकच्छलात् ।
5 अपश्यत्फलितां स्थाणावहिंसाद्यष्टपुष्पिकाम् ॥ ३८ ॥

आत्मप्रभा नाम सा योगिनी स्थाणौ परमेश्वरविषया-महिंसादिमेवाष्टपुष्पीं फलितामज्ञासीत् । कस्मात् - - दि यदष्टकं तद्रूपात् ॥ तृतीयापह्नुतिः । असत्यत्वप्रतिपादकेन च्छलशब्देन निर्देशात् ॥ ३८ ॥

10 रुद्राणीति पुरंध्रीभिर्योगिनीति च योगिभिः ।
आत्मप्रभेति सा ज्ञाता विशंत्यर्कस्य मंडलम् ॥ ३९ ॥

पुरंध्रीप्रभृतिभिः सा रुद्राण्यादित्वेनोल्लिखिता ॥ उल्लेखः । एकस्यानेकधा कल्पनात् ॥ ३९ ॥

सूनुर्वाक्पतिराजोस्य प्रसाद इव मूर्तिमान् ।
15 हिताय सर्वलोकानामुदपद्यत शांभवः ॥ ४० ॥

लोकानां हितार्थं मूर्तो हरप्रसाद इव विग्रहराजो(?वाक्-पतिराजो)स्य पुत्रो जातः ॥ गुणोत्प्रेक्षा । प्रसादाख्यो गुणो विषयित्वेन संभावितः ॥ ४० ॥

स भुजाभ्यां जयान् प्रापदष्टाशीत्यधिकं शतम् ।
20 बुद्ध्या निर्मलया कालं कामं च मनसाजयत् ॥ ४१ ॥

स जयानामष्टाशीत्यधिकं शतं भुजाभ्यां प्रापत्। स शुद्धया बुध्या कालं निर्मलेन च मनसा काममजयत्। इति नवत्यधिकं शतं प्राप्तम्॥ ४१॥

**गणनां सूचयन्तीव जयानामिति यच ताः।**
5 **धामचयीकला वक्त्रपंचके पंचधा स्थिताः॥४२॥**

युगुलम्॥

यत्र वर्तमानानां जयानां नवत्यधिकं जयानां शतमिति संख्यां पंचवक्त्रस्येश्वरस्य मुखपंचके स्थिता धाम(त्र)यीकलाः सूचयन्ति। चन्द्रकलाः षोडश। सूर्यकला द्वादश। वह्नि-
10 कला दशेति। प्रतिवक्त्रमष्टात्रिंशद्भवन्ति। अष्टात्रिंशत्संख्यास्ता धामत्रयीकलाः। पंचमुखस्येश्वरस्य प्रतिमुखं वर्त्तमानत्वात्पंच-भिर्गुणिता भवन्तीति नवत्यधिकं शतं भवन्तीति॥ क्रियो-त्प्रेक्षेयम्। सूचनक्रियायाः संभावनात्॥ ४२॥

**तं प्रासादमसौ चक्रे पुष्करे व्योमवाससः।**
15 **भक्त्या त्यक्तोत्तरासंगः कैलास इव भाति यः॥४३॥**

असौ राजा पुष्करतीर्थे हरस्य तं प्रासादं चक्रे यो भक्त्या त्यक्तोत्तरासंगः कैलास इव भाति। त्यक्तोत्तरदिक्संगश्च॥ द्रव्योत्प्रेक्षा। कैलासस्य द्रव्यत्वात्॥ ४३॥

**धर्मस्येव नवः सर्गः स्थितिः -- इव श्रियः॥**
20 **सिंहराज ---- स्तस्य संहार इव मान्मथः॥४४॥**

यो धर्मस्यैव सर्ग इत्यादिरन्वयो योज्यः । लावण्यातिशयेन रणरणिकादायिलात्संहारोत्प्रेचणम् ॥ सिद्धात्मिकोत्प्रेचा । सर्गादयो घञन्तास्तेषां कृदभिहितो भावो द्रव्य - - - वद्भावेन सिद्धत्वात् ॥ ४४ ॥

5 **पुष्करे पुष्कलसुधं प्रासादं सोऽपि निर्ममे ।**
**श्वेतो गुण इवोपास्ते यो देवं शशिशेखरम् ॥ ४५ ॥**

श्वेतो गुण इव यो हरं सेवते तं प्रासादं सुधासितं स पुष्करे कृतवान् ॥ उपमालंकारसंकरोत्प्रेचा । श्वेतगुणस्य साधारणत्वेनोपमा भवति संभावनायां तूत्प्रेचा ॥ ४५ ॥

10 **सिंहराजं तमालोक्य सिंहराजमिवापरम् ।**
**धर्मस्य त्रिपदीच्छेदी ननाम कलिकुंजरः ॥ ४६ ॥**

अपरं लोकोत्तरं सिंहमिव यं दृष्ट्वा सिंहराजाख्यं धर्मस्य पादत्रयापहारी कलिहस्ती नष्टः । त्रिपदी गतिविशेषः । तच्छेदी च । हस्ती सिंहं दृष्ट्वा नश्यति ॥ जात्युत्प्रेचा । सिंहो 15 जातिः ॥ ४६ ॥

**सूनुर्विग्रहराजोऽस्य सापराधानपि द्विषः ।**
**दुर्बला इत्यनुध्यायन्नक्षत्रिय इवाभवत् ॥ ४७ ॥**

अमी दुर्बला भवन्तीति कृतापराधानपि शत्रूंश्चिन्तयन्नक्षत्रिय इवासीत् । क्षत्रियकार्यस्य मारणस्याकरणात् ॥ जातेरभावो-20 त्प्रेचा । अक्षत्रिय इति जात्यभावः ॥ ४७ ॥

अनीलाश्वमिवादित्यं कुर्वद्भिर्हयरेणुभिः ।
लेभे खुररजोघोरान्धकार इव नाम यः ॥ ४८ ॥

न नीला अश्वा यस्य तमिवादित्यं कुर्वतीभिर्वाजिधूलि-
भिर्हेतुभिः खुररजोघोरान्धकार इति यो नाम लब्धवान् ।
5 अर्थादश्वानां खुररजसा घोरोन्धकारो यस्मादिति विग्रहः ॥
गुणस्य । गुणस्य नीलत्वस्याभावोत्प्रेक्षणम् ॥ ४८ ॥

अतिष्ठन्तमिवात्मानं मत्वा स्वखुरधूलिभिः ।
बभ्रमुर्वाजिनो यस्य संकटास्वपि वीथिषु ॥ ४९ ॥

स्वखुररजोभिर्वीथीनामात्मानमवटरूपेणातिष्ठन्तमिव मत्वा
10 यदश्वाः संकटभागेष्वप्यभ्रमन् । रजसा वटानां पिहितत्वात्तेष्वपि
वाजिनो बभ्रमुरित्यर्थः ॥ क्रियायाः । स्थितिक्रियाया अभावो-
त्प्रेक्षणम् ॥ ४९ ॥

गृह्णद्भिः परया भक्त्या बाणलिंगपरंपराः ।
अनर्मदेव यत्सैन्यैर्निरमीयत नर्मदा ॥ ५० ॥

15 भक्त्यातिशयात्पूजार्थं बाणलिंगानि गृह्णद्भिर्यत्सैन्यैर्नर्मदा
अनर्मदेव निर्मिता । नर्मदायास्तदा बाणलिंगाभावात् ॥
द्रव्य - - - - - - ति द्रव्यस्याभावोत्प्रेक्ष - - - ॥ ५० ॥

त्यक्तं तपस्विना (स्वच्छं) यशोंशुकमितीव यः ।
गुर्जरं मूलराजाख्यं कंथादुर्गमवीविशत् ॥ ५१ ॥

तपस्विना वराकेण तपोधने(न) च स्वच्छं यशोंशुकमनेन त्यक्तमितीव मूलराजनामानं गूर्जरं कंथाख्यं दुर्गं चौरं च स प्रावेशयत् । तपस्वी चानुकंप्यार्थ इति कोशः । कंथा च दुर्गं परुषत्वात् ॥ श्लेषोक्त्या ॥ ५१ ॥

5 सूर्यवंशप्रसूतस्य चन्द्रमंडलनिर्गता ।
तस्य रेवामयी वाहैः कीर्त्तिर्मलिनिताभवत् ॥ ५२ ॥

सूर्यवंश्यस्य तस्य वाजिभिश्चन्द्रमंडलान्निर्गता रेवामयी कीर्तिर्मलिनीकृता ॥ सापह्नवा । रेवामयीति मयटः प्रयोगात् ॥ ५२ ॥

10 व्यधादाशापुरीदेव्या भृगुकच्छे स धाम तत् ।
यद्रेवास्पृष्टसोपानं चन्द्रश्चुंबति मूर्धनि ॥ ५३ ॥

आशापुर्याख्याया देव्याः प्रासादमवटेकरोत् । यद्रेवया स्पृष्टसोपानं चन्द्रः शिरसि चुंबति । रेवाया श्चन्द्रप्रभवत्वाच्चन्द्रेण चुम्बनोक्तिः ॥ प्रतीयमानोत्प्रेक्षा । अत्रवाक्यार्थप्रतीतिसमय
15 एव पदार्थसमन्वयपर्यालोचनया चुंबकस्य तात्विकत्वाभावावगमा-दार्थः संभावनात्मक इवार्थ इति प्रतीयमानोत्प्रेक्षा ॥ ५३ ॥

तस्य दुर्लभराजोभूदनुजो माधवानुगः ।
नारीणां सततं येन हृदये मदनायितम् ॥ ५४ ॥

माधवो मंत्रिविशेषो वसंतश्च सोनुगो यस्य स दुर्लभ-

राजोस्यानुजोभूत् । येन नारीणां चेतसि न मदनायितं । काक्वा मदनायितमेव बभूवेत्यर्थः । मदस्य नायितं नीयमानस्य प्रयोजनम् । णिजो णिजन्तान्नपुंसके भावे क्तः । नारीणां स्त्रीणां चेतसि मदनायितं कामवदाचरितम् । कामस्य
5 वसंतानुगो भवति ॥ ५ ४ ॥

**चन्द्रोदयन्ति पूर्वाद्रौ मलये चन्दनन्ति च ।**
**मन्दरे क्षीरपूरन्ति तुषारन्ति हिमालये ॥ ५५ ॥**

( उपमोपक्रमोत्प्रेक्षाद्वयम् ।)

**यशांसि शीतलीकर्त्तुमिच्छयेव दिगङ्गनाः ।**
10 **यस्य गोविंदराजाख्यः स तस्मादुदपद्यत ॥ ५६ ॥**

युगलम् ॥ ( हेतूत्प्रेक्षा ।)

यस्य यशांसि कर्त्तृणि पूर्वशैलादिषु चन्द्रोदयादिवदाचरन्ति । अत्र हेतूत्प्रेक्षा । इच्छयेवेति हेतुः । दिगंगनाः शीतलीकर्त्तुमिच्छयेव ॥ उपमोपक्रमोत्प्रेक्षा सर्वप्रातिपदिकेभ्यः
15 क्विबित्येके इत्युपमानात्क्विब्विधा - - - - माप्रतीतिपर्यवसाने तूपमानस्य प्रकृते संभवौचित्यात्संभावनोत्थाने उत्प्रेक्षा ॥ स गोविंदराजाख्यस्तस्माज्जातः ॥ ५ ५ ॥ ५ ६ ॥

**यस्य वैरिघरट्टात्वं गमितस्य कवीश्वरैः ।**
**वीर्यशाल्यनुसृत्यर्थमिवाभ्राम्यद्यशो जगत् ॥ ५७ ॥**

20 कवीन्द्रैः शत्रुषु घरट्टात्वेन वर्ण्यमानस्य यस्य यशो जगदभ्राम्यत् ।

अत्र फलमुत्प्रेक्ष्यते । वीर्येण शालन्ते ये ते वीर्यशालिनो वीर्ययुक्ताः शालयस्य तेषामनुसरणार्थम् ॥ फलोत्प्रेक्षा । अनुसरणं फलम् ॥ ५७ ॥

तस्माद्वाक्पतिराजेन संभूतमवनीभुजा ।
5 कलिः कृती कृतो येन भू(मिश्च त्रिदि)वीकृता ॥५८॥

वाक्पतिराजाख्येन राज्ञा तस्मात्संभूतम् । भावे क्तः । येन कलिः कृतयुगी - - - चतुष्टयेन कलावपि धर्मसेवनात् । अतो भूमिश्च स्वर्गः संपादितः ॥ अतिशयोक्तिः । कलिकृतयोर्भेदेप्यभेदोपनिबंधनात् । एवं भूमित्रिदिवयोर्ज्ञेयम् ॥ ५८ ॥

10 अंबाप्रसादमाघाटपतिं यः सेनयान्वितम् ।
व्यसृजद्यशसः पश्चात्पार्श्वं दक्षिणदिक्पतेः ॥ ५९ ॥

आघाटस्य हाडानामनगरस्य पतिं स्वामिनमम्बाप्रसादनामानं ससैन्यं यमस्य समीपं यशसः पश्चादनयत् । पूर्वमंबाप्रसादो दक्षिणाशापतिनिकटं प्रापितः पश्चात्स्वं यश इति कार्य-
15 कारणयोः पौर्वापर्यरूपकालविध्वंसरूपः कालव्यत्यासः ॥ ५९ ॥

भिन्नमंबाप्रसादस्य येन च्छुरिकया मुखम् ॥
प्रतापजीवितासृग्भिः सममेव व्यमुच्यत ॥ ६० ॥

येन कर्तृभूतेन च्छुरिकया करणभूतया भिन्नमंबाप्रसादस्य मुखं कर्मभूतं प्रतापेन जीवितेनासृजा च समकालं परित्यक्तम् ॥
20 अत्र कार्यकारणयोर्भिन्नकालयोः समकालत्वम् ॥ ६० ॥

**गोत्रभिद्वैरिभिर्वैरिस्त्रीभिर्दहन इत्यपि ॥**
**मृत्युर्वैरिभटैर्वैरिपत्तनैः कर्बुरेश्वरः ॥ ६१ ॥**
**प्रचेता इति नीतिज्ञैस्त्राणकामैः सदागतिः ॥**
**धनदोर्थिभिरीशश्च भुवा यः प्रत्यपद्यत ॥ ६२ ॥**

5 युगुलम् ।

वैरिभिर्यो गोत्रभित्कुलहन्ता वज्री चावसितः । वैरि-स्त्रीभिर्दहनो दहतीति दहनः । तासां हतान् भर्तॄननुस-रन्तीनां दाहहेतुत्वात् । दहनोग्निश्च । मृत्युर्यमः । कर्बुरेश्वरो नैर्ऋतः शून्यीकरणात् । प्रचेताः प्रकृष्टचेता वरुणश्च । सतो 10 आगतिर्यस्य पवनस्य । धनं ददाति वैश्रवणस्य । ईशः स्वामी पूर्वोत्तरदिक्पतिश्च ॥ भेदस्योद्भेदरूपातिशयोक्तिः ॥ ६१ ॥ ६२ ॥

**इन्द्रनीलशलाकाया धत्ते स्फटिकपीठताम् ॥**
**या मूर्त्तिः शांभवी रात्रौ नाजैषीत् सापि तद्यशः ॥ ६३ ॥**

इन्द्रनीलशलाकेवेन्द्रनीलशलाकेत्युपचारात्कलंकः । तस्याः स्फटि-15 कपीठतां या शांभवी मूर्त्तिर्धत्ते सापि मूर्त्तिः पूर्णचन्द्रो यद्यशो नाजैषीदतुलयदित्यर्थः ॥ संबधे * - - - - - - रूपातिशयोक्तिः ॥ ६३ ॥

**अद्यापि यो न गतवान्परलोकं यतो भुवा ॥**
**।वस्मृतान्यमहीपालमालया हृदि धार्यते ॥ ६४ ॥**

* The lacuna is indicated in the original Ms. itself

योद्यापि परलोकं न गतः । यतोन्यान्राज्ञो विस्मरंत्या भुवा लोकेन स्मर्यते । तेभ्योस्याधिकगुणत्वादिति भावः ॥ संबंधे असंबन्धः । परलोकगमनसंबंधेप्यसंबन्धः ॥ ६४ ॥

**वीर्यरामः सुतस्तस्य वीर्येण स्यात्स्मरोपमः ॥**
**यदि प्रसन्नया दृष्ट्या न दृश्येत पिनाकिना ॥ ६५ ॥**

तस्य पुत्रो वीर्यरामनामा राजा वीर्येण शक्त्या स्मरोपमः स्याद्यदीश्वरेण प्रसन्नया दृष्ट्या न वीक्ष्येत ॥ अत्र स्मरमादृश्यसंबन्धेपि पिनाकिप्रसन्नदृष्टिविषयत्वादसंबन्धः ॥ अतिशयोक्तयः ॥ ६५ ॥

**अद्वितीयो रणाल्लब्धः शुद्धिमान् रक्षणोचितः ॥**
**परित्यक्तो महायोधैः सहायत्वे स्थितैरपि ॥ ६६ ॥**
**अगम्यो यो नरेन्द्राणां सुधादीधितिसुंदरः ॥**
**जघ्ने यशश्चयो यश्च भोजेनावन्तिभूभुजा ॥ ६७ ॥**
**तस्य चामुंडराजेन कनिष्ठेन विनिर्ममे ॥**
**विष्णोर्नरपुरे धाम विष्णुलोके तथात्मनः ॥ ६८ ॥**

त्रिभिः कुलकम् ।

अद्वितीयोप्रतिमल्ल एकाकी च संग्रामात्प्राप्तः शुद्धो रक्ष्यः सहायैरपि योधैस्त्यक्तः । राज्ञामगम्यश्चन्द्रमनोहरो यशश्चयो यश्चोज्जयिनीराजेन हतः । तस्य कनिष्ठेन भ्रात्रा चामुंडराजेन नरपुरे विष्णोः प्रासादो निर्मितः आत्मनश्च धाम स्थानं

विष्णुलोके निर्मितम् ॥ अत्र प्रस्तुतयोर्यस्य यज्ञस्याद्वितीयादिभिर्गुणैरभिसंबंधः । स च केवले न भवतीति हननक्रियया सह निर्दिष्टः । इति गुणरूपधर्माभिसंबंधे तुल्ययोगिता । तस्येत्यत्र निर्माणक्रिययाभिसंबंधः ॥ ६१ ॥
5 ६७ ॥ ६८ ॥

**अभूद्दुर्लभराजोस्माद्यदीयैः प्रतियोगिभिः ॥**
**चराचराणां लुठितं पादान्ते भूभृतां भयात् ॥ ६९ ॥**

यस्य शत्रुभिश्चराचराणां भूभृतां राज्ञां शैलानां च पादान्ते चरणान्ते प्रत्यन्तपर्वतान्ते च भयाल्लुठितं । भावे क्तः ॥ अत्र
10 चराचरभूभृतोप्रस्तुताः । तेषां लुठनक्रिययाभिसंबंधः ॥ ६९ ॥

**मातंगसंगरे यस्मिन्वीरसिंहेस्तमागते ॥**
**अपरागोनुतापश्च विधिना प्रापि कर्कशः ॥ ७० ॥**

म्लेच्छसंग्रामे यस्मिन्वीरसिंहे हते विधिना निन्दा पश्चात्तापश्च प्राप्तो दुःसहः । मातंगा हस्तिनश्च ॥ अपरागानु-
15 तापयोरप्रस्तुतयोः कार्कश्यगुणाभिसंबंधः । एवं प्रस्तुताप्रस्तुतयोर्गुणक्रियाभिसंबंधात्तुल्ययोगिता चतुर्विधा ॥ ७० ॥

**तस्य विग्रहराजेन भोगीन्द्रेणानुजन्मना ॥**
**शेषेण च महीभारं त्याजिताः पृथिवीभृतः ॥ ७१ ॥**

भोगिनां भोगभाजामहीनां चेन्द्रेण तस्य कनीयसा भ्राता

विग्रहराजेन शेषेण च पृथिवीभृतो राजानः शैलाश्च भूभारं त्याजिताः ॥ ७१ ॥

धृता शिरोभिः शेषेण दंष्ट्रया क्रोडमूर्त्तिना ॥
पृष्ठेन कमठेन्द्रेण स्कन्दैर्दिग्गजमालया ॥ ७२ ॥
5 पादैः पर्वतचक्रेण भुजाभ्यां येन दोष्मता ॥
वसुन्धरा ततो गाढमाश्लेषसुखमन्वभूत् ॥ ७३ ॥
युगुलं ॥

शेषादिभिर्मस्तकादिभिरूढा ततो येन भुजाभ्यामूढा भूरालिंगनसुखं प्रापत् ॥ धृतेत्यादि दीपकम् ॥ ७२ ॥ ७३ ॥

10 हिमान्ता हिमशैलस्य कैलासस्य तटत्विषा ॥
विबभौ गंगया मेरोः कीर्त्या भूरस्य भूभृतः ॥ ७४ ॥

विबभाविति मध्यस्थेन क्रियापदेन सर्ववाक्यानां संबंधः ॥ दीपकत्रयम् ॥ ७४ ॥

चकार दुर्बलानां यः क्षमामागस्विनामपि ॥
15 जह्रे निरपराधानामपि यश्च बलीयसाम् ॥ ७५ ॥

सापराधानामपि दुर्बलानां क्षमां क्षांतिमकरोत् । निरपराधानामपि बलवतां क्षमां भूमिमहरत् ॥ कारकदीपकम् ॥ क्षमेति कारकस्य साधारणत्वात्कर्मकारकम् ॥ ७५ ॥

मालवेनोदयादित्येनास्मादेवाप्यतोन्नतिः ॥
20 मंदाकिनीह्रदादेव लेभे पूरणमब्धिना ॥ ७६ ॥

उदयादित्येन मालवदेशीयेनास्मादेवोन्नतिरुदयः प्राप्ता।
समुद्रेण गंगाहृदादेव पूरणं प्राप्तम् ॥ ७६ ॥

सारंगाख्यं तुरंगं स ददौ यस्मै मनोजवम् ॥
नह्युच्चैःश्रवसं क्षीरसिंधोरन्यः प्रयच्छति ॥ ७७ ॥

5 मनोवज्जवो यस्य तं सारंगनामानमश्वं स मालवाय ददौ ॥
क्षीरसमुद्रादन्य उच्चैःश्रवसं न ददाति ॥ ७७ ॥

जिगाय गूर्जरं कर्णं तमश्वं प्राप्य मालवः ॥
लब्धानूरुः सूर्यरथं करोति व्योमलंघनम् ॥ ७८ ॥

तमश्वं प्राप्य मालवः कर्णाख्यं गूर्जरमजयत्। सूर्यरथं
10 लब्धानूरुराकाशलंघनं करोति ॥ ७८ ॥

पृथ्वीराजः सुतस्तस्मात्ततो(भूदतिसारभृत् ?) ॥
कुमारब्रह्मचारी हि कुमारो मद(नान्तकात् ?) ॥ ७९

— — — — — — जाख्यः पुत्रो जातः। कामवैरिणः
कुमारः कुमारब्रह्मचारी भवति ॥ ७९ ॥

15 रात्रौ रात्रौ चतुर्बाहुः स एवादृश्यतानुगैः ॥
ऐरावणं विनान्यः कश्चतुर्दन्तो निशम्यते ॥ ८० ॥

अनुगैः प्रतिनिशं स एव चतुर्बाहुर्दृष्टः। ऐरावणादन्यः
कश्चतुर्दन्तः श्रूयते ॥ दृष्टान्ताः। पूर्वत्र साधर्म्येणोत्तरत्र
वैधर्म्येण ॥ ८० ॥

पुष्करे ब्रह्मकोशाप्ति चुलुक्यशतसप्तकम् ॥
हत्वा ब्रह्मस्वकामानां कुलक्षयमुपादिशत् ॥ ८१ ॥

ब्रह्मकोशस्य ब्रह्मस्वस्याप्तिर्हरणं यस्मात्तत् । चुलुक्यानां जनविशेषाणां शतसप्तकं हत्वा स राजा ब्रह्मस्वहरणाभिलाषिणां कुलक्षयमुपादिशत् । ब्रह्मस्वहृत्कश्चिन्नासीदित्यर्थः ॥ ८१ ॥

अच्छिन्नं सोमनाथाध्वन्यन्नसत्रं चकार यत् ॥
इदं मोक्षार्थिनां भोगमानुषंगिकमब्रवीत् ॥ ८२ ॥

सोमनाथतीर्थमार्गेऽनवरतमन्नसत्रं चकारयदिदमन्नसत्रकरणं मोक्षकांक्षिणामानुषंगिकफलमकथयत् । अवश्यं मोक्षः प्राप्तव्यः । प्रसंगादन्नमपिप्राप्तमित्यर्थः ॥ ८२ ॥

तस्मादजयराजोऽभूद्वदान्यो यद्वदान्यतः ॥
सर्वरत्नप्रदात्सिन्धोः कल्पवृक्षस्य जन्म तत् ॥ ८३ ॥

दातुस्तस्माद्दाताऽजयराजाख्यो जातो यत्तत्समस्तरत्नदातुः समुद्रात्कल्पवृक्षस्य जन्म भवति ॥ ८३ ॥

श्लाघ्यः सल्हण इत्यस्य जप्यते नाम पार्थिवैः ॥
बीजाक्षरत्रयच्छायां धत्ते शक्तित्रयस्य यत् ॥ ८४ ॥

अस्य सल्हण इति नाम राजभिर्जप्यते यत्तच्छक्तीनां त्रयस्य बीजाक्षरत्रयशोभां धत्ते । तन्नामजपनाच्छक्तिप्राप्तिर्भवतीत्यर्थः ॥ ८४ ॥

सौम्येन मालवपतिः सुल्हणो येन दीप्तिमान्।
शमितोम्बुधरग्रस्तदवाग्निश्रियमानशे ॥ ८५ ॥

येन सौम्येन शमितो मालवेन्द्रः सुल्हणो मेघशमितदावाग्निस्थितिं प्रापत् ॥ ८५ ॥

5 कीर्तिपुष्पविकासं यं रुद्धवान् कल्पशाखिनाम्॥
मन्ये तमेव मोक्तुं यः पुरंदरपुरं ययौ ॥ ८६ ॥

स राजा कल्पवृक्षाणां यशः पुष्पविकासं यं रुद्धवांस्तमेव मोक्तुं स स्वर्गं गत इति जाने। कल्पवृक्षेभ्योतिदातासीत् इत्यर्थः। अतः कल्पतरूणां यस्तेन कीर्तिविकासो रुद्ध 10 आसीत्तस्मिन्प्रमीते (मृते) स उत्पन्नः ॥ ८६ ॥

पद्मसंबंधिनीं लक्ष्मीं रिपुरामामुखानि यत्॥
अत्याजयदिति प्राप्ता गुणिभिः श्रीर्न कैस्ततः ॥ ८७ ॥

स राजा वैरिस्त्रीमुखानि पद्मशोभामत्याजयदित्यतो गुणिभिर्गुणवद्भिः पद्मैश्च कैर्न श्रीः प्राप्ता ॥ निदर्शने द्वे। 15 संभवद्वस्तुसंबधाऽसंभवद्वस्तुसंबंधा च। अन्यत्रान्यसंबंधिनीं छायामन्यः कथं दधतीति नास्ति वस्तुसंबंधः ॥ ८७ ॥

स दुर्वर्णमयैर्भूमिं रूपकैः पर्यपूरयत्॥
तां सुवर्णमयैस्तत्र कविवर्गस्त्वपूरयत् ॥ ८८ ॥

दुर्वर्णं रौप्यं। दुष्टावर्णाश्च। तन्मयै रूपकैर्दीनारविशेषे-

नाटकैश्च स भुवमपूरयत् । सौवर्णैः सुवर्णमयैः शोभनाचर-मयैश्च कविवर्गस्तामपूरयत् ॥ ८८ ॥

**कीर्त्तिं स वर्तमानानां भटैर्जह्रे जयप्रियैः ॥**
**अतीतानागतानां तु रूपकैरजयप्रियैः ॥ ८९ ॥**

5 जयः प्रियो येषां तैर्भटैः करणभूतैर्वर्तमानानां कीर्ति-महरत् । अजयस्य राज्ञः प्रियै रूपकैर्दीनारविशेषैर्भूतानां भाविनां च राज्ञां कीर्त्तिमहरत् ॥ ८८ ॥

**सोमलेखा प्रियाप्यस्य प्रत्यहं रूपकैर्नवैः ॥**
**कृतैरपि न संस्पर्शं कलंकेन समासदत् ॥ ९० ॥**

10 तस्य प्रिया सोमलेखाख्या राज्ञी चन्द्रलेखा च प्रत्यहं नवैः कृतैः रूपकैर्दीनारविशेषैर्मृगैश्च हेतुभिः कलंकेन पापेन लाञ्छनेन च स्पर्शं न प्रापत् ॥ व्यतिरेकभेदः । उपमानादु-पमेयस्याधिकगुणत्वेन न्यूनगुणत्वेन वा भावात् ॥ ९० ॥

**भाग्यैः समं समुत्पन्नं प्रजाभिः सह लालितम् ॥**
15 **वर्धितं सुकृतैः साकमर्णोराजमसूत सा ॥ ९१ ॥**

भाग्यादिभिः सह समुत्पन्नत्वादिलक्षणविशिष्टमर्णोराजं पुत्रं साजनयत् ॥ भाग्यानां तदुत्पत्तिकारणत्वे तदुत्पत्तेर्वा भाग्यकारणत्वे सहभावोपनिबंधात्कार्यकारणविध्वंसरूपातिश-योक्तिसहिता सहोक्तिः ॥ ९१ ॥

कीर्त्त्या विमलया साकं देवी सा भूपतेः प्रिया ॥
प्रतापेण महोग्रेण प्रियः पुत्रश्च सोऽभवत् ॥ ९२ ॥

शुद्धया कीर्त्त्या साकं समं सा देवी राज्ञः प्रियाभूत् । एवमूत्तरार्धेऽपि योज्यम ॥ सहोक्तौ ॥ ९२ ॥

लक्ष्मीर्विनाभिमानेन कीर्त्तिर्दुर्यशसा विना ॥
बभौ श्रीखंडवल्लीव तस्य भोगभृता विना ॥ ९३ ॥

निर्गर्वा श्रीर्निन्दारहिता च कीर्त्तिस्तस्य बभौ यथा सर्पत्यक्ता चन्दनलता ॥ ९३ ॥

कवित्वेनेव पांडित्यं द्रविणेनेव यौवनम् ॥
10 ननाश तद्रिपुबलं विना दीप्तेन तेजसा ॥ ९४ ॥

यथा कवित्वेन विना पांडित्यं यथा च धनेन विना यौवनं तथा तेजसा विना तच्छत्रुबलं नष्टम् ॥ विनोक्तौ ॥ ९४ ॥

लोभप्रदोषमुक्तास्य कमला कमलिन्यभूत् ॥
औदार्यातपहीनासीत्तस्य प्र- - नां तु सा ॥ ९५ ॥

15 लोभाख्येन प्रकृष्टेन दोषेण निशारंभेण च मुक्ता श्रीः पद्मिन्यासीत् । तस्य वैरिणां सा श्रीरौदार्यमेवातपस्तेन हीना पद्मिन्यासीत् ॥ गम्या विनोक्तिः । मुक्तहीनादिपदैर्विनार्थस्य द्योतितत्वात् ॥ ९५ ॥

तापिताः प्राक् प्रतापेन विचारेण विशोभिताः ॥
अनुरक्तास्ततः पश्चाद्यशसाच्छादिता दिशः ॥ ९६ ॥

पूर्वं प्रतापेन तापिताः । ततो विचारेण व्यवहारपरिच्छेदेन विशोभिताः । अतोनुरक्ता दिशो यशसाच्छादिताः । अग्निना तापिताश्चिराकङ्कवादिना (?) शोभिताः गैरिकादिना रंजिताः सुवर्णविकृतयो वस्त्रा — — — — — — — — भ्ररसव्यवहारप्रतीतिः ॥ ९ ६ ॥

विमुक्ता निखिलैर्दोषैर्निचिता निखिलैर्गुणैः ॥
शिवभक्तिरभूद्यस्य सदा हृदयहारिणी ॥ ९७ ॥

दोषैरनवधानादिभिस्त्यक्ता गुणैर्युक्ता शिवभक्तिर्यस्य मनोहरा सदाभूत् ॥ निर्दोषादिधर्मारोपात् साध्वीव्यवहारप्रतीतिः ॥ ९ ७ ॥

नयसिक्ता प्रतापेन क्रमात्पल्लवितोद्गमा ॥
विकसत्कीर्त्तिपटला फलत्पुण्यपरम्परा ॥ ९८ ॥
दत्ताशीः शमितक्लान्तिक्षुत्पिपासैः सदाध्वगैः ॥
लक्ष्मीर्यद्भुजमारूढा वृद्धिं शाखाशतैर्गता ॥ ९९ ॥

युगुलम् ॥

प्रथमं नयेन सिक्ता । ततः प्रतापेन पल्लववान् कृत उद्गमो

यस्याः सा । विकसत् कीर्तिपटलं* यस्याः सा । फलन्ती फलवदाचरन्ती पुण्यपरम्परा यस्याः सा ॥ ९८ ॥

शमिताः क्लान्तिक्षुत्पिपासा येषां तैरध्वगैः सन्मार्गगामिभिर्दत्ताशीर्यैद्भुजार्जिता श्रीः शाखानां प्रकाराणां शतैर्वृद्धिं गता ॥
5 सेकादिकार्यारोपात् पल्लवितत्वादिधर्मारोपाच्चोभयारोपेण लच्च्या लताव्यवहारप्रतीतिः ॥ ९९ ॥

**स्तनद्रथांगमिथुना भ्रमद्भ्रमरमालिकाः ॥**
**श्रीसन्मुखाम्बुजा वापीर्यो ददौ सुरसद्मसु ॥ १०० ॥**

स्तनवदाचरन्ति कूजन्ति च रथाङ्गमिथुनानि यासु ताः ।
10 कचवदाचरन्त्यः स्फुरन्त्यश्च भ्रमरमालिका यासु । श्रीमन्ति मुखाम्बुजानि यासां ता वापीर्देवगृहेषु योदात् ॥ अत्रौपम्यस्य गर्भत्वम् ॥ १०० ॥

**चन्द्रचंदनकर्पूरक्ताहारविरोधिनी ॥**
**सुदूरवर्त्तिनी यस्य कीर्तिः पांडुत्वमाययौ ॥ १०१ ॥**

15 चन्द्रादीनां विरोधिनी न्यक्कुर्वती सुदूरे वर्तमाना कीर्तिः पांडुत्वं शुभ्रत्वमापत् ॥ अत्र विरहिणीव्यवहारप्रतीतेर्लौकिके लौकिकव्यवहारसमारोपः ॥ १०१ ॥

**मनोज्ञत्वेपि नाचुम्बि स्वमुखेन कदा चन ॥**
**स्वच्छंदं तेन यत्की - - - - - ॥ १०२ ॥**

---

* कुमुदं was the original reading which has been later changed into पटलं ।

तेन राज्ञा कीर्तिर्मनोज्ञत्वेपि सति स्वमुखेन न कदा-
चिद्यत्स्पृष्टा तेन स्वकी - - - - - - - - - -॥ १०१ ॥*

- - - - - - - - - ॥
- - - - - पुरुषार्थं कृतार्थताम् ॥

5 करणानि कर्माणि संश्रयो यस्य तं भोगं बुद्धिबलेनैव
भजन् द्रष्टा सर्वव्यवहारसाक्षी स देवः स्वं पुरुषार्थं कृतार्थताम-
नयत् । शत्रूञ्जितवानित्यर्थः । सांख्यदर्शनवादिनामात्मा
सप्तधा बुद्ध्यहंकारतन्मात्रापंचकत्वेन प्रकृतेर्जातं विकारमस्पृशन्
मूलप्रकृतिसंगतां बुद्धिं भासयंस्विच्छायया स्फुरयन् बुद्धिमुखे-
10 नैव करणसंश्रयं चक्षुरादीन्द्रियाश्रयं भोग भजन् बुद्धिमुखेनैव
पुरुषार्थं पुरुषविवेकरूपं कृतार्थतां नयति ॥ नीतिशास्त्रीये
वस्तुनि सांख्यशास्त्रीयवस्तुसमारोपः ॥

स्फुरत्प्रभावलोत्साहसिध्युपायगुणोदया ॥
सर्वांगसुंदरी यस्य नीतिर्वल्लभतां ययौ ॥

15 स्फुरन्तः प्रभावबलोत्साहा येषु ते । सिद्ध्युपायगुणोदया
यस्यां सा । सिद्धयो भूम्यादीनामुपायाः सामादयः । उदया

* Henceforward to the end of the Canto, most of the leaves are wanting in the lower portion, which should contain about 5-7 lines of the original. Consequently henceforward at regular intervals there would be short lacunæ of 2 or 3 verses with the Com. thereon

आत्मादीनाम् । तथा सर्वांगेषु स्वाम्यादिषु सुंदरी यस्य नीतिर्वल्लभतां श्रद्धेयत्वं ययौ । तन्नीतिरन्येषां कांचणीयाभूदित्यर्थः । स्फुरद्भिः प्रज्ञाबलोत्साहैः सिद्धौ वशीकरणे उपायात्मकानां गुणानामुदयो यस्यां सा । प्रज्ञादिभिर्भूर्वशी-
5 कृतेत्यर्थः ॥ अत्र नीतिशास्त्रप्रसिद्धे वस्तुनि नायिकाव्यवहार-प्रतीतिः ॥

**भुसत्तायामुदात्तो यः परस्मै पदमग्रहीत् ॥**
**अनुदात्तो रिपुस्तस्य भूप्राप्तावात्मने पदी ॥**

भुविसत्तायां प्रशस्तत्वे साम्राज्ये सति यः परस्मै परार्थं
10 पदं त्राणमग्रहीत् । यत उदात्तः । — — — — — — —
— — — — — — — — — — आत्मार्थमेव पदी प — — —
— — — — — — — — ॥*

— — — — — — — — — — — — — — — —

— — — — — — मंत्रपेक्षा दैवबलनियोगज्ञस्य मित्रबलापेक्षा
15 च नाभूत् । यः षट्संख्यकं प्रमाणं जानाति वि— —गं च वेत्ति स ईश्वरं सर्वज्ञं नापेक्षते ॥ लौकिके मीमांसाव्यवहार-समारोपः ॥

---

* See note on p 158

**सपक्षे दृश्यते नास्ति विपक्षे यज्जडात्मनि ॥**
**तत्प्रतापाग्निमान्भूभृद्धेतौ धूमेऽन्वमायि यः ॥**

जनेन सपक्षे स्वाश्रिते विषये यद्दृश्यते । स्वपक्षस्योपकारकं कुर्वन्यद्दृष्ट इत्यर्थः । जडात्मनि विपक्षे शत्रौ यन्नास्ते अपकारप्रवृत्त एवाभूदि(त्य)र्थः । तत्तस्माद्धूतावायुधे खड्गे सत्यां(?) भूभृत्प्रतापाग्निमाननुमितः । धूमे इति हेतोरारोपः । कालत्वेन धूमानुकारात् । सपक्षे महानसे दृष्टः । विपक्षे जलादौ न दृष्टः । ततो भूभृत्पर्वतो धूमे हेतौ कारणे लिंगे सत्यग्निमाननुमीयते ॥ लौकिके तर्कव्यवहारसमारोपः ॥

**अहार्यलंघनैस्त्यक्तरसास्वादैः सदूषणैः ॥**
**येन पीनसितावस्थां कीर्तिरत्याजि वैरिणाम् ॥**

येन राज्ञा शत्रूणां कीर्तिः पीनां सितां चावस्थां त्याजिता — — । लघुर्मलिना च कीर्त्तिः कृतेत्यर्थः । यतः अहार्याणां पर्वतानां लंघनैरारोहावरोहैस्त्यक्तो रसाया भूमेरास्वादो यैः करणभूतैः । सह दूषणेन दोषेण यानि तैः । अहार्यैरपरिहार्यैश्च लघनैर्भोजनविच्छेदादिभिः । त्यक्तो रसानां (मधु)रादीनामास्वादो येषु । तथा सच्छोभनमूषणं मरीचादिर्येषु तैर्हेतुभिर्भिषजा पीनसिता प्रतिश्यायत्वं तस्या अव— — —जते । गतिबोधेति नियमात् (Pānini 1. 4. 52) कीर्त्तिशब्दस्य कर्मत्वम् । तस्य च त्यजीत्यकर्मण्युत्पन्नेन— — — — — — — — ॥ लौकिके आयुर्वेद— — — — — — — ॥

| | | |
|---|---|---|
| Çlokavartika (English), Fasc. 1–7 @ 1/4/- each | 8 | 12 |
| *Çranta Sutra of Apastamba (Text), Fasc. 2–17 @ -/10/- each | 10 | 0 |
| *Çranta Sutra of Çānkhāyana, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4; Vol. IV, Fasc. 1 @ -/10/- each | 10 | 0 |
| Cri Bhashyam (Text), Fasc 1–3 @ -/10/- each | 1 | 14 |
| Cri Cantinatha Charita, Fasc. 1–4 | 2 | 8 |
| Dāna Kriyā Kaumudī, Fasc. 1–2 @ -/10/- each | 1 | 4 |
| *Dasa Rupa (Text), Fasc. 2–3 @ -/10/- each | 1 | 4 |
| Dharmabindu, Fasc. 1 @ -/10/- each | 0 | 10 |
| Dictionary of the Kashmiri Language, Part I | 15 | 0 |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1–4 | 3 | 2 |
| Gobhilīya Grhya Sūtra, Vol I | 3 | 2 |
| Ditto Vol II, Fasc 1–2 @ 1/4/- each | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista | 2 | 0 |
| Ditto Grihya Sangraha | 0 | 10 |
| Haralata | 1 | 14 |
| Institutes of Vishnu (Text), Fasc. 1–2 @ -/10/- each | 1 | 4 |
| Kala Madhava (Text), Fasc. 1–4 @ -/10/- each | 2 | 8 |
| Kāla Viveka, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Karmapradiph, Fasc. 1 | 1 | 4 |
| Kātantra, Fasc. 1–6 @ -/12/- each | 4 | 8 |
| Katha Sarit Sagara (English), Fasc. 1–14 @ 1/- each | 14 | 0 |
| Kavi Kalpa Lata, Fasc 1 | 0 | 10 |
| Kavindravacana Samuccayah | 3 | 8 |
| Kiranavali, Fasc 1–3 @ -/10/- | 1 | 14 |
| Kurma Purana, Fasc. 1–9 @ -/10/- each | 5 | 10 |
| *Lalita Vistara (Text), Fasc. 2–6 @ -/10/- each | 3 | 2 |
| * Ditto (English), Fasc. 1–3 @ 1/- each | 3 | 0 |
| Madana Pārijāta, Fasc. 1–11 @ -/10/- each | 6 | 14 |
| Mahā-bhāsya-pradīpodyota, Vol. I, Fasc 1–9; Vol. II, Fasc. 1–12, Vol. III, Fasc. 1–10 @ -/10/- each | 19 | 6 |
| Ditto Vol. IV, Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Maitra, or Maitrayaniya Upanishad, Fasc. 1 | 0 | 10 |
| Manutikā Sangraha, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Mārkandeya Purana (English), Fasc. 1–9 @ 1/- each | 9 | 0 |
| *Markandeya Purana (Text), Fasc 4–7 @ -/10/- each | 2 | 8 |
| *Mimansa Darcana (Text), Fasc. 9, 11–17 @ -/10/- each | 5 | 0 |
| Mirror of Composition (English), Fasc. 1–4 @ 1/- each | 5 | 0 |
| Mugdhabodha Vyakarana, Vol. I, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Nirukta (2nd edition), Vol. I, Fasc. 1–2 @ 1 4/- | 2 | 8 |
| *Nirukta (old edition), Vol. I, Fasc. 1, 2, 4, 5, 6; Vol. II, Fasc 5, 6; Vol III, Fasc. 1–6; Vol IV, Fasc 1–8 @ -/10/- each | 13 | 2 |
| Nityācārapaddhati, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Nityācārapradīpa, Vol. I, Fasc 1–8, Vol. II, Fasc. 1–4 @ -/10/- each | 7 | 8 |
| Nrisinha Tapani of Atharva-Veda (Text), Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Nyāyabindutīkā, Fasc. 1 @ -/10/- each | 0 | 10 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1–4 @ -/10/- each | 2 | 8 |
| *Nyayavartika (Text), Fasc. 2–7 @ -/10/- each | 3 | 12 |
| Nyayasarah | 2 | 0 |
| Padumāwati, Fasc. 1–6 @ 2/- each | 12 | 0 |
| *Parāçara Smṛti, Vol. I, Fasc 2–8; Vol. II, Fasc. 1–6, Vol. III, Fasc. 1–6 @ -/10/- each | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| *Paricista Pravan (Text), Fasc 5 @ -/10/- each | 0 | 10 |
| Pariksamukha Sutram | 1 | 0 |
| Prabandhacintāmani (English), Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Prākrita-Paingalam, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Prakrita Lakshanan | 1 | 8 |
| Prthviraja Vijaya, Fasc. 1–2 | 1 | 4 |
| Rasarnavam, Fasc. 1–3 | 3 | 12 |
| Raviśiddhanta Manjari, Fasc. 1 | 0 | 10 |
| Saddarśana-Samuccaya, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Sadukti-karna-mrita, Fasc. 1 @ -/10/- each | 0 | 10 |
| Samaraicca Kaha, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| *Samavada Sanhita, Vol. I, Fasc. 1–4, 6–10; Vol. 2, Fasc. 2–6; Vol. 3, Fasc. 1–7; Vol. 4, Fasc. 1–6; Vol. 5, Fasc. 1–8 @ -/10/- each | 21 | 14 |
| *Sankara Vijaya (Text), Fasc. 2–3 @ -/10/- each | 1 | 4 |
| *Sankhya Aphorisms of Kapila (English), Fasc. 2 | 1 | 0 |
| *Sankhya Pravachana Bhashya, Fasc. 2 | 0 | 10 |
| Sānkhya Sūtra Vṛtti, Fasc. 1–4 @ -/10/- each | 2 | 8 |
| Ditto (English), Fasc. 1–3 @ 1/- each | 3 | 0 |
| | 1 | 4 |

| | | |
|---|---|---|
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ -/10/- each .. | | |
| Srauta Sutra of Latyayana (Text), Fasc. 1-9 @ -/10/- each | 5 | 10 |
| Sri Surisarvasvam, Fasc. 1-3 @ -/10/- each .. .. | 1 | 14 |
| Suçruta Saṁhitā (English), Fasc. 1 @ 1/- each .. .. | 1 | 0 |
| Suddhi Kaumudī, Fasc. 1-4 @ -/10/- each | 2 | 8 |
| Sundaranandam Kavyam .. .. | 1 | 0 |
| Suryya Siddhanta, Fasc. 2 @ 1/4 - .. | 1 | 4 |
| Syainika Sastra .. .. | 1 | 0 |
| *Taittereya Saṁhita (Text), Fasc 17-45 @ -/10/- each .. .. | 18 | 2 |
| *Taittiriya Aranyaka of Black Yajur Veda (Text), Fasc. 5-11 @ -/10/- each .. .. .. .. .. .. | 4 | 6 |
| *Taittiriya Brahmana (Text), Fasc. 3-24 @ -/10/- each .. | 13 | 2 |
| Taittiriya Pratisakhya (Text), Fasc. 1-3 @ -/10/- each . | 1 | 14 |
| *Tandya Brahmana (Text), Fasc. 13-18 @ -/10/- each . | 3 | 12 |
| Tantra Vārtika (English), Fasc. 1-14 @ -/1/4 .. .. | 17 | 8 |
| *Tattva Cintāmani, Vol I, Fasc. 2-9; Vol. II, Fasc. 4-10, Vol. III, Fasc. 1-2; Vol. IV. Fasc. 1, Vol V, Fasc. 1-5; Part IV, Vol. II, Fasc. 1-12 @ -/10/- each .. . .. .. | 21 | 14 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-6 @ -/10/- each | 3 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc 1-8, Vol II, Fasc. 1-3, Vol. III, Fasc. 1 @ -/10/- each .. . .. .. | 7 | 8 |
| *Tattvarthadhigama Sutram, Fasc 2-3 @ -/10/- each .. | 1 | 4 |
| *Tattvarthadhigama Sutram, Fasc. 2-3 @ -/10/- each . .. | 1 | 4 |
| Tirthacintamoni, Fasc 1-4 @ -/10/- each .. . | 2 | 8 |
| Trikānda-Maṇḍanam, Fasc. 1-3 @ -/10/- | 1 | 14 |
| Tul'si Satsai, Fasc 1-5 @ -/10/- . . . . | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-14 @ -/10/- each .. | 8 | 12 |
| *Uttara Naishadha (Text), Fasc. 6-12 @ -/10/- each .. . | 4 | 6 |
| Uvāsagadasāo (Text and English), Fasc. 1-6 @ 1/- .. .. | 6 | 0 |
| Vajjalaggam, Fasc 1 .. .. . .. | 0 | 10 |
| Vallāla Carita, Fasc. 1 @ -/10/- .. .. .. | 0 | 10 |
| *Varaha Purana (Text), Fasc 2-14 @ -/10/- each .. | 8 | 2 |
| Varṣa Kriyā Kaumudī, Fasc. 1-6 @ -/10/- . .. .. | 3 | 12 |
| Vayu Purana (Text), Vol I, Fasc. 1-6; Vol. II, Fasc. 1-7 @ -/10/- each | 8 | 2 |
| *Vedanta Sutras (Text), Fasc. 7-13 @ -/10/- each .. | 4 | 6 |
| Vidhāna Pārijāta, Fasc. 1-8, Vol. II, Fasc 2 @ -/10/- .. . | 5 | 10 |
| Ditto Vol. II, Fasc. 2-5 @ 1/4/- .. | 5 | 0 |
| Ditto Vol. III, Fasc 1 .. .. | 0 | 10 |
| Vishahitam, Fasc. 1 .. .. . . | 0 | 10 |
| Vivādaratnākara, Fasc 1-7 @ -/10/- each . .. | 4 | 6 |
| Vrhat Svayambhū Purāna, Fasc 1-6 @ -/10/- .. . . | 3 | 12 |
| *Vrhannaradiya Purana (Text), Fasc 3-6 @ -/10/- each .. . | 2 | 8 |
| Yogaśastra, Fasc 1-5 .. .. .. .. | 5 | 10 |
| *Yoga Sutra of Patanjali (Text and English), Fasc. 3-5 @ 1/- each . | 3 | 0 |

## *Tibetan Series.*

| | | |
|---|---|---|
| Amarakosah, Fasc. 1-2 .. . . . | 4 | 0 |
| Amartika Kamdhenuh .. . .. .. . | 1 | 0 |
| Bauddhastotrasangraha, Vol. I .. .. .. | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4 @ 1/- each .. | 4 | 0 |
| Nyayabindu (A Bilinguel Index) .. .. . | 1 | 0 |
| Nyayabindu of Dharmakirti, Fasc 1-2 .. .. | 2 | 0 |
| Pag-Sam Śhi Tin, Fasc 1-4 @ 1/- each . . . | 4 | 0 |
| Prajna Pradipah .. .. .. .. | 1 | 0 |
| Rtogs *brjod dpag hkhri* Śiṅ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-11; Vol. II, Fasc. 1-11 @ 1/- each .. .. .. | 22 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3, Vol. III, Fasc. 1-6 @ 1/- each . .. .. .. .. | 14 | 0 |
| Tirned-Kun-Din .. .. .. | 1 | 0 |

| | | |
|---|---|---|
| Notice of Sanskrit Manuscripts, Fasc. 1-34 @ 1/- each .. .. | 34 | 0 |
| Ditto ditto (Palm-leaf and selected paper MSS.) @ 3/- each .. | 6 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. | 5 | 0 |
| Report on the Search of Sanskrit MSS., 1895-1900, 1901-1905, and 1906-1911 @ -/8/- each .. .. .. .. | 1 | 8 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1447.

# PṚTHVĪRĀJA VIJAYA.

A SANSKRIT EPIC WITH THE COMMENTARY OF JONARĀJA.




BY

S. K. BELVALKAR, M.A., PH.D.

FASC. III.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1922

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agents—*

MESSRS LUZAC & Co., 46, *Great Russell Street, London, W.C.*

M. PAUL GEUTHNER, 13, *Rue Jacob, Paris, VI^e.*

***Complete copies of those works marked with an asterisk * cannot be supplied as some of the Fasciculi are out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each | 3 | 2 |
| Advaitachintā Kaustubha, Fasc. 1–4 @ -/10/- each | 2 | 8 |
| *Agni Purana (Text), Fasc. 4–14 @ -/10/- each | 6 | 14 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each | 1 | 14 |
| Aitarēya Brāhmana, Vol. I, Fasc 1–5; Vol II, Fasc. 1–5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1–8 @ -/10/- each | 14 | 6 |
| Aitareyalocana | 2 | 0 |
| Amarakosha, Fasc. 1–2 | 4 | 0 |
| *Anu Bhasyam (Text), Fasc. 2–5 @ -/10/- each | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc 1–3 @ -/10/- each | 1 | 14 |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- | 1 | 0 |
| Astasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each | 3 | 12 |
| *Atharvana Upanishads (Text), Fasc. 2–5 @ -/10/- each | 2 | 8 |
| Ātmatattvaviveka, Fasc. 1–3 | 1 | 14 |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13; Vol. II, Fasc. 1–11 @ 1/- each | 24 | 0 |
| Bālam Bhatti, Vol. I, Fasc. 1-2; Vol. II, Fasc. 1 @ -/10/- each | 1 | 14 |
| Bauddhastotrasangraha | 2 | 0 |
| Baudhāyana Śrauta Sūtra, Fasc. 1-3; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–4 @ -/10/- each | 7 | 8 |
| *Bhamati (Text), Fasc. 5–8 @ -/10/- each | 2 | 8 |
| Bhasavritty | 0 | 10 |
| Bhātta Dīpikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each | 5 | 0 |
| Bodhicaryāvatāra of Çāntideva, Fasc 1–7 @ -/10/- each | 4 | 6 |
| Brahma Sutras (English), Fasc. 1 @ 1/- | 1 | 0 |
| Brihaddevatā, Fasc 1–4 @ -/10/- each | 1 | 8 |
| Brihaddharma Purāna, Fasc. 1–6 @ -/10/- each | 3 | 12 |
| Çatadūsanī, Fasc. 1–2 @ -/10/- each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each | 8 | 0 |
| *Çatapatha Brāhmana, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–7; Vol V, Fasc. 1–4 @ -/10/- each | 14 | 6 |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Ditto Vol. VII, Fasc. 1–5 @ -/10/- | 3 | 2 |
| Ditto Vol IX, Fasc 1–2 | 1 | 4 |
| Çatasahasrikā-prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 @ -/10/- each | 11 | 14 |
| *Caturvarga Chintāmani, Vol. II, Fasc. 4–25; Vol. III, Part I, Fasc. 1–18, Part II, Fasc. 1-10 Vol. IV, Fasc. 1–6 @ -/10/- each | 35 | 0 |
| Ditto Vol. IV, Fasc. 7cte 1/4/- each | 1 | 4 |
| Ditto Vol. IV, Fasc. 8e, [illegible] @ -/10/- | 1 | 14 |
| Çlokavartika (English), Fasc. 1–7 @ 1/4/- each | 8 | 12 |
| *Çrauta Sutra of Apastamba (Text), Fasc. [illegible]7 @ -/10/- each | 7 | 8 |
| *Çrauta Sutra of Çānkhāy[illegible] Vol. I, [illegible] 1–7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1-4: Vol [illegible] @ -/10/- each | 10 | 0 |
| Cri Bhashyam (Text), Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Cri Cantinatha Charita, Fasc. 1–4 | 2 | 8 |
| Dāna Kriyā Kaumudī, Fasc. 1-2 @ -/10/- each | 1 | 4 |

- - - - - - - - - - - - - - - - - - - - - - - - - *

**मङ्क्त्वा यशसि यं भूमिराश्लिष्टाजनि रत्नसूः ।**
**रजस्वलास्वभावोयं विधिनैवोपपादितः ॥**

यस्य यशसि निमज्ज्य यमालिङ्ग्य भूमिः रत्नसूर्जाता ।
5 विधिनैवायं रजस्वलास्वभाव उपपादितः । रजस्वला ऋतुमती
सपांशुश्च ॥

**लालनाताडनविदामनुरज्यन्ति योषितः ।**
**अतो यशःप्रतापाभ्यां भूमिस्तेन (वशी)कृता ॥**

लालना प्रीतिस्तां ताडन च ये विदन्ति तेषां स्त्रियोनु-
10 रज्यन्ति । अतो हेतोस्तेन यशःप्रतापाभ्यां भूमिर्वशीकृता ॥
समासोक्तयः ॥

**बुद्धिमद्भिर्बुद्धशास्त्रैः सत्यवा - - - - - - ।**
**व्यायामिभिर्बलीयोभिः सहायैर्यो विदिद्युते ॥**

बुद्धिमत्त्वादिविशिष्टैः सहायैर्यो दीप्तः ॥ परिकरः । विशे-
15 षाणां साभिप्रायत्वात् ॥

**अहिद्विषा प्रसिद्धेन गोमण्डलधरेण च ।**
**स्वैरावतारोचितेन हरिणा यः समोऽभवत् ॥**

अहिः कालियनागो वृत्रासुरश्च । अहिर्भ्रातृव्यश्च । तद्द्विषा ।
गावो धेनवो नेत्रादि च । गौर्भूमिश्च । तन्मण्डलधरेण । स्वैरं

* See note on p. 158.

स्वेच्छयावतारेषु मत्स्यादिरूपग्रहणेषूचितेन । स्वश्यामावैरावत ऐरावणस्तेन रोचितेन । स्वात्मीया ऐरी इरायां भूमौ भवा भूमिविषया अवता रक्षकता तया रोचितो यो राजा हरिणा विष्णुना इन्द्रेण च समोऽभवत् ॥ विशेष्यस्य विशेषाणां च
5 साम्याच्छ्लेषः । अत्राच्युतेन्द्रयोरप्रस्तुतयोः श्लेषः ॥

यः सदन्तायुधकरान् परिहर्तव्यपद्धतीन् ।
अत्यन्तगजनान् मत्तान् मातङ्गानजयद्रणे ॥

यो मातङ्गान् म्लेच्छांश्च युद्धेऽजयत् । सदन्तानि शोभन-धाराणि आयुधानि ————————————— करेण च
10 सहितान् । तथा त्याज्यमार्गान् । म्लेच्छानां दुराचारत्वात् ।—
————————————————————— ॥

म्लेच्छानां - - - - - - - - - - - - - - - |
- - - - - - - - - - - - - - - - - - - ॥*

———————————————नत्वम् । पदानां सुप्ति-
15 ङन्तानां भङ्गेनांशांशिक--भेदेन । नीरसा रसवर्जिताः । भिन्नः स्वरः उदात्तादिर्येषाम् । तथा स्वापाः सुलभाः शब्दा न तु लक्ष्म्यादयोर्था येस्ते यस्य द्विषः श्लेषा इवासन् ॥ अत्र शत्रुश्लेषयोः प्रस्तुताप्रस्तुतयोः श्लेषः ॥ श्लेषत्रयम् ॥

---

* See note on p. 158.

अत्यन्तशुद्धपक्षाणां स्वहंसानामिवान्तरम्।
यत्पूर्वजन्मपुण्यानामज्ञासीत् केवलं विधिः॥

यस्य पूर्वजन्मनि पुण्यानामन्तरं विधिरेव ज्ञातवान्। अत्यन्तं शुद्धः पक्षः सिद्धान्तो येषाम्। हंसपक्षे पक्षाः पत-
5 त्राणि॥ अत्र शुभवस्तुसंपत्तिलक्षणे कार्ये प्रस्तुते तत्कारण-
पूर्वजन्मपुण्याभिधानादप्रस्तुतप्रशंसा॥

अनादित्यमिव व्योम तामसा इव वासराः।
अलोचनेव जनता जज्ञे यस्य प्रयाणके॥

यस्य प्रयाणे सति आकाशादीनां सूर्यरहितत्वमिव
10 जातम्॥ अत्र सेनारजोवर्णने प्रस्तुतेऽनादित्यत्वादितत्कार्याभि-
धानेनाप्रस्तुतप्रशंसा॥

रजन्यामपि पद्मिन्यः कुमुदिन्यो दिनेपि यत्।
नापुष्पन्यस्य साम्राज्ये जाड्यमेवात्र कारणम्॥

रात्रावपि पद्मिन्यस्तथा दिवाप्युत्पलिन्यो यन्न विकासिता-
15 स्तत्र जाड्यमेव हेतुः॥ तद्राज्ये जडा एव न विकसिता इति
सामान्ये प्रस्तुते तद्विशेषकुमुदिनीपद्मिन्यभिधानेनाप्रस्तुत-
प्रशंसा॥

वर्ध्यमानं स्वकुलजैः केषांचित् पुण्यकर्मणाम्।
कल्पान्तस्थायितामेति धनं स्थाने निवेशितम्॥

पूर्वपुरुषैर्वर्ध्यमानं स्थाने निवेशितं सत् कल्पान्तं तावत्स्थैर्यं केषांचिद्भाग्यवतामेति ॥ अत्राज- - - - - - - - - - - - - - - - - -
ते सामान्याभिधानेनाप्रस्तुतप्रशंसा ॥

- - - - - - - - - - - - - - - - - - - - - - - - |

5 - - - - पृथिव्यामपि - - - - - - - - ॥*

———————————जा नगरं कृतवान्। येषु काव्येषु तन्नगरं न वर्णितं तानि काव्यानि धन्यानि न भवन्ति ॥ तान्यधन्यानीत्यत्र वैधर्म्येणाप्रस्तुतप्रशंसा। इदं काव्यं धन्यमिति प्रस्तुतार्थप्रतीतेः ॥

10 भवत्यजयमेरुत्वं सार्थं यस्य सुरालयैः।
न हि पुण्यप्रभावेन तदस्त्येव न यद्भवेत् ॥

यस्य नगरस्याजयमेरुभावः सार्थको भवति देवावासैः। मेरुर्हि देवावासः। एतमेव विशेषं सामान्येन समर्थयते। न यद्भवेत्तन्नास्ति। सर्वमेव भवेदित्यर्थः पुण्यप्रभावात् ॥ अर्था-
15 न्तरन्यासः। विशेषस्य सामान्येन समर्थनात् ॥

वर्जन्ति स्थानमाहात्म्यादधमा अविगीतताम्।
वेश्यानामपि यद्यत्र वास्तवं रागमेलकम् ॥

---

* See note on p. 158

अधमाः स्थानमहिम्नाविगीततामविप्रलम्भकत्वं यान्ति । वेश्यानामपि विप्रलम्भकानां रागः समुज्जोऽभूत् ॥ सामान्यस्य विशेषेण समर्थनादर्थान्तरन्यासः ॥

धौर्यस्यावैति नोत्कर्षं शिवपादयुगं विना ।
5 उत्का एव हि सर्वेऽस्मिन्नृषयो दर्शनं प्रति ॥

शिवपादद्वयादन्यद्वस्तु सोत्कर्षं बुद्धिर्न जानाति । एतदेवोत्तरार्धेन कारणभूतेन समर्थयते । शिवपाददर्शनार्थं सर्वे ऋषयो यस्मात् सोत्कण्ठाः ॥ कारणमृषीणामुत्कण्ठितत्वं समर्थकमित्यर्थान्तरन्यासः ॥

10 यत्र प्रत्यक्षफलदः सेवितोऽग्निः सुकर्मणाम् ।
धूमो हि घनतामेत्य भजते वृष्टिहेतुताम् ॥

यत्र शोभनकर्मणां फलदोऽग्निर्भवति । तथाहि । यज्ञादिषु धूमो वृष्टिहेतुर्भवति । अत्र अग्निसेवनस्य कार — — — — — — समर्थकम् ॥ अर्थान्तरन्यासः ॥

15 उच्चेयताराकुसुमा वन्द्य - - - - - - ।
- - - - - - त्रश्रव्यसप्तर्षितृतीयस्वरा ॥

उच्चेतुं शक्यानि ताराकुसुमानि य — — — — — — — — — किनी हृदो यस्याम् । तथा श्रोतुं शक्यः अव्यस्तृतीये सवने स्थाने स्वरो — — — — — — — — — — — — — — — ।।*

* See note on p. 158.

**क्षमायां यदि काठिन्यं प्रैत्ये तापकता द्विषाम् ।**
**अपालक - - - - - - - - - - - - - ॥***
**- - - - - - - - - - - - - - - - - - ।**
**- - - - ति नोत्थानं यत्र संपूर्णपादपि ॥**

5 अन्यत्र देशे त्रयाणां पादानां भङ्गेऽपि धर्म— — — — — — — — पलायते इत्यर्थः। यत्र देशे चतुष्पादपि धर्म उत्थानं निर्गमनं नेच्छति। तत्रैव तिष्ठतीत्यर्थः॥ विभावना विशेषोक्तिश्च। अनवस्थितेर्हेतुः पादसामग्री। तदभावेऽपि तत्फलं धर्मानवस्थानमुत्पन्नमिति विभावना। तथा उत्थानस्य
10 कारणं संपूर्णपादत्वम्। तत्सद्भावेऽप्युत्थानाभावस्य फलस्योत्पत्ति-रिति विशेषोक्तिः॥

**आयव्ययेषु कालैक्यं यत्र सर्वस्य दृश्यते ।**
**व्ययस्त्वादौ सुकृतिनामायस्तस्यानुयात्रिकः ॥**

यत्र सर्वस्य लोकस्य धनोत्पत्तित्यागेषु समकालत्वं दृश्यते।
15 अर्जयन्तो जना व्ययं कुर्वन्तीत्यर्थः। यत्र सुकृतिनामादौ व्ययस्तस्य व्ययस्योत्पत्तिरनुयात्रिकी। पश्चाद्धनागम इत्यर्थः॥ अतिशयोक्ती। आयः कारणं व्ययः कार्यं भवति। कारण-कार्ययोः पौर्वापर्यं प्रसिद्धम्। तत्र त्वायव्यययोस्तुल्यकालत्वम्। तथोत्तरार्धे आयव्यययोः कारणकार्ययोः पौर्वापर्यविपर्ययः॥

* See note on p. 158.

**पौराणां हृदये यत्र संनिधत्ते त्रिलोचनः ।**
**अन्तस्तु पौरनारीणां जाज्वलीति मनोभवः ॥**

यत्र जनानां चित्ते हरः संनिधानं करोति । कामस्तु पौरस्त्रीचित्ते ज्वलतितराम् ॥ असंगतिः । हरः कामदाहस्य
5 कारणम् । अत्र तु हरः पौरचित्ते सन्निहितः । कामस्तु पौरस्त्रीचित्ते ज्वलतीति कार्यकारणयोर्विभिन्नदेशत्वात् ॥

**यत्र स्त्रीणामपाङ्गेभ्यः पूर्णाङ्गो जायते स्मरः ।**
**युवभिर्जीर्यमाणोपि रूपेण लभते बलम् ॥**

यत्र पुरस्त्रीणां कटाक्षेभ्यः पूर्णाङ्गः कामो जायते । तथा
10 तरुणैर्जि- - - - पेण कामो बलं लभते ॥ विषमम् । सर्वत्र कारणानुगुणं कार्यं प्रसिद्धम् । — — — — — — — — — — कामस्य रूपहेतुकबललाभ — — — ॥*

**- - - - - - - - यत्र राजशिखामणिः ।**
**विश्वस्य मान्यतां लब्धुं सेव्यते परमेश्वरः ॥**

15 यत्र रक्तैर्विरक्तैर्वा — — — मणिः राजा चन्द्रः शिखामणिर्यस्य । परमेश्वरः सेव्यते । विश्वकर्तृकं मानं प्राप्तुम् ॥ — — — विकल्पस्य । विचित्रस्य विफलप्रयत्नलक्षणत्वात् । अत्र हि मानलाभार्थं सेवाख्यस्य प्रयत्नस्य विपरीतफलनिष्पत्तिहेतुत्वम् । सेवाकारिणां हि मानहानिः ॥

* See note on p. 158.

भूपैर्भुजेपि यत्रत्यैर्धार्यते भूः ससागरा ।
कीर्तिः स्वच्छतनुस्तेषां न माति भुवनेष्वपि ॥

यत्रत्यै राजभिर्भूमिः ससमुद्रा भुजचक्रेऽपि धार्यते ।
स्वच्छा शुधा सूक्ष्मा च तनुर्यस्याः सा कीर्तिर्भुवनेषु न वर्तते ॥
5 अधिकद्वयम्। अधिकस्याश्रयाश्रयिणोरनानुरूप्यलक्षणत्वात्। अत्र ह्याश्रयस्य भुजस्याश्रयिभूताया भूवस्तुच्छत्वमहत्वाभ्यामनानुरूप्यम् । भुवनानामाश्रयाणां कीर्तेस्तदाश्रयीभूताया महत्वतुच्छत्वाभ्याम् ॥

धर्मो विवर्धते यत्र वास्तव्यानां विभूतिभिः ।
10 धर्मेण च विवर्ध्यन्ते वास्तव्यानां विभूतयः ॥

पौरश्रीभिर्धर्मो वर्धते धर्मेण च पौरश्रियो वर्धन्ते ॥
अन्योन्यम् । परस्परं वर्धनक्रियाजननात् ॥

वापीकूपतटाकेषु प्रपासु विविधासु च ।
दिवमप्युपयातानां दृश्यते यत्र जीवनम् ॥

15 वाप्यादिषु जीवनं जलं प्राणश्च स्वर्गगतानां दृश्यते ॥
विशेषः । अनाधारमाधेयमित्यादिलक्षणत्वात् । अत्र जीवस्याधारः शरीरिणः । ते स्वर्गं गतास्तथापि जीवनं दृश्यते इत्यनाधारमाधेयम् ॥

त्रिदिवे दिवि पाताले कीर्ति - - - दिक्षु च ।
20 यदीयानां नरे - - - - - - - - - - स्थिता ॥

स्वर्गादिषु कीर्तिरेकरूपा समासमं युगपत्स्थिता॥ वि --
----------------------- ॥*

--------------- गैः पुनः राजभिः
कीर्तिरनुपाल्यते ॥ व्याघातः। उत्पत्तिविनाशयोरेकोपाय-
5 त्वात्। अत्र राजभ्य एव वृषोत्सर्गैरेवोत्पत्तिः। तैरेव तेभ्य
एव च विनाशः॥

**अबला इति बाध्यन्ते सबलैरन्यदेशजैः।**
**तेनैव हेतुना यत्र रक्ष्यन्ते राजभिः परे॥**

अन्यत्र राजभिरबलत्वाद्राजानो बाध्यन्ते। तस्मादेव हेतो-
10 स्तत्र तैः शत्रवो रक्ष्यन्ते॥ व्याघातः। व्याघातार्थं संभाव्यमान-
स्याबलत्वस्य बाधाविरुद्धरक्षणनिष्पादकत्वेन समर्थनात्॥

**यत्र वीर्यं प्रतापस्य प्रतापः कारणं श्रियः।**
**श्रीर्धर्मस्य नरेन्द्राणां धर्मो भोगापवर्गयोः॥**

यत्र वीर्यादयः प्रतापादीनां हेतवः॥ कारणमाला॥

15 **अर्थो धर्मानुगो यत्र कामश्चार्थानुगो नृणाम्।**
**कामस्य शिवकामानां मोक्षोऽप्यनुगतां गतः॥**

यत्र श्रेयस्कामानां धर्माद्यनुगा अर्थादयः॥ एकावली।
अर्थादीनां धर्माद्यनुगतत्वात्॥

* See note on p. 158.

**यौवनेन वपुः स्त्रीणां यत्र रूपेण यौवनम् ।**
**रूपं कान्तिविशेषेण स लावण्येन गर्जति ॥**

यत्र यौवनादिभिर्वपुराद्यो गर्जन्ति ॥ मालादीपकम् । यौवनादीनामुत्तरोत्तरवपुरादिगर्जनाख्यगुणावहलात् ॥

5 **शंभुर्लोकत्रये सारं तस्य सारं त्रिनेत्रता ।**
**तत्रापि चन्द्रमास्तस्य यत्कान्तावदनोपमा ॥**

ईश्वराद्यो लोकत्रयादौ सारभूताः ॥ सारः । उत्तरोत्तरोत्कर्षात् सारः ॥

**कनकाब्जरजश्छन्ना वातायनविहारिणः ।**
10 **मानवैर्यत्र सेव्यन्ते स्वर्गङ्गावीचिमारुताः ॥**

यत्र वातायनगता नाकनदीपवना मनुष्यैः सेव्यन्ते यतो हेमाब्जरजःपूर्णाः ॥ काव्यलिङ्गम् । कनकाब्जेत्यादेः पदार्थत्वात् । काव्यलिङ्गस्य च हेतोर्वाक्यप — — — — — — — ॥

**द्रष्टुं दिग्भ्यो दशभ्यो यदपर्याप्तदृगष्टकम् ।**
15 - - - - - - - - - - - - - - ॥

— — — — — — — — — — — — —
— — — — — - — — — ॥*

* See note on p. 158.

- - - - हेतोर्वाक्यार्थत्वात् । पूर्वश्लोकेऽपर्याप्तदृगष्टक इति विशेषणस्य पदार्थत्वाभिमानात् ॥

सर्वस्वहारिणस्त्रस्तो वरुणो वाडवाद्ध्रुवम् ।
5 यत्कूपान् सेवते तोयं गिरिदुर्गे कुतोऽन्यथा ॥

वरुणस्य सर्वस्वं समुद्रस्तं हरतो वाडवाग्नेर्ध्रुवं भीतो वरुणो यत्कूपान् सेवते । वरुणत्रासस्य साध्यस्य साधनमाह । अन्यथा यदि न वरुणस्य भयं स्यात्तर्हि तद्गिरिदुर्गे तोयं कथं स्यात् । वरुणस्य जलाधिपतित्वादिति भावः ॥ अनुमानम् । साधनात्
10 साध्यप्रतीतिरनुमानस्य लक्षणम् । अत्र गिरौ जलसंभवात् त्रासानुमानम् ॥

वरुणादिमहेन्द्रान्तमूर्तयो यत्र पार्थिवाः ।
शिष्टदिक्पतिमूर्त्तित्वं गृह्णतेऽन्यपुरीः प्रति ॥

वरुणादारभ्येन्द्रं तावत्पञ्च लोकपालास्तेषां मूर्तयस्तेजोंशा
15 येषां तथाविधास्तत्र राजानो भवन्ति । तत्र वरुणत्वमशेषजनाप्ययनात् । वायुत्वं बलित्वात् । कुबेरत्वं धनदत्वात् । शर्वत्वं सर्वोत्कर्षात् । इन्द्रत्वमखण्डिताज्ञत्वात् । यत्रत्या राजानोऽवशिष्टा ये दिक्पतयो वह्नियमनैर्ऋत्यास्तद्भावं शत्रुनगरीषु गृह्णन्ति । अग्नित्वं तासां दाहात् । यमत्वं शत्रुमारणात् ।
20 नैर्ऋतत्वं शत्रुपुरीनिर्वसत्वकारणात् ॥ अनुमानम् ॥

स्वर्गं पालननिर्माणवर्णनैर्देववेश्मनाम् ।
ध्रुवं पश्यति यत्रत्यो राजा चित्रकरः कविः ॥

पालनादिभिः राजादयः स्वर्गं गच्छन्ति (? पश्यन्ति) ॥ यथासंख्यम् । उद्दिष्टानामर्थानां क्रमेणानुनिर्देशात् ॥

5 व्यर्थौ यशःप्रतापाभ्यां राज्ञां यत्रेन्दुभास्करौ ।
धत्तोऽर्धरात्रमध्याह्ने छत्रत्वं देववेश्मनाम् ॥

यत्र राज्ञां यशःप्रतापाभ्यां हेतुभ्यां व्यर्थौ निष्प्रयोजनौ सन्तौ चन्द्रार्कौ अर्धरात्रे मध्याह्ने च देवगृहाणां छत्रभावं धत्तः ॥ प्रतीपम् । यशःप्रतापाभ्यां चन्द्रार्कयोराक्षेपात् ॥

10 - - - - - - - - - - - - - - - - - - ।
- - - - - - - - - - - - - - - - - - ॥
— — — — — — — — — — — — ॥*

यत्कान्ताकेशसंस्कारधूपधूमः सुधासितम् ।
श्यामीकरोति सततं सौधं सितकरं ततः ॥

15 यत्स्त्रीकेशसौगन्ध्यार्थं धूमः पूर्वं सौधं ततश्चन्द्रं श्यामीकरोति ॥ पर्यायः । क्रमेणैकस्यानेकस्मिन्ननेकस्यैकस्मिन्नवस्थानात् ॥

---

* See note on p. 158.

यत्राधत्ते निशि मरुत् सौधेन्दुमणिशीकरैः।
घर्मोदबिन्दून्त्रामाणां गण्डयोश्चन्द्रकान्तयोः॥

यत्र रात्रौ स्त्रीणां वायुरिन्दुसुन्दरयोर्गण्डयोर्घर्मजलकणान् गृह्णाति। कैः। सौधचन्द्रकान्तकणैः॥ परिवृत्तिः। चन्द्रकान्त-
5 जलकणैः स्वेदाम्बुग्रहणात् समम्॥

पञ्चभिर्मार्गणैः पौष्पैः स्मरो हरति कामिनाम्।
हृत्काञ्चनाम्बुजवनं वियोगाग्निपरीक्षितम्॥

पुष्पमयैः पञ्चभिर्बाणैः कामो विरहाग्नौ परीक्षितं चित्त-
हेमपद्मवनं हरति॥

10 सर्वस्वमपि संत्यज्य स्वगृहाद्यत्र मानिनः।
यशो गृह्णन्ति तद्यस्य परे चर्वितचर्वकाः॥

यस्य यशसः चर्विते चर्वणेऽपि कृते चर्वका भवन्ति। तद्यशः सर्वस्वं दत्वा मानिनो गृह्णन्ति॥ परिवृत्तिः। सर्वस्वे-
नाधिकेन यशसो न्यूनस्य ग्रहणेन न्यूनत्वात्। पूर्वत्र पञ्चभिः
15 शरैः हेमपद्मवनहरणादधिकम्॥

अपावनं धनं यत्र सर्वथा त्यागिनां गृहे।
अत्यागः स्तूयते मौग्ध्याद्बालाभिर्यत्र कामिनाम्॥

अपगतमवनं रक्षणं त्यागाभावो यस्य तद्धनं त्यागिनां
दातॄणां गृहे भवति। बालाभिः कामिनामत्यागः अतिशये-

नापराधः स्तूयते मुग्धत्वात् ॥ परिसंख्या । अपावन - - - -
- - त्यागिधनादावेव नियमात् । त्यागिधन - - वा - - - -
दन्य - - - - - - - - - - - ॥*

- - - - - देपि यत्र श्रोत्रमहाज्वरः ।
5 स्वस्याकीर्तिर्भवेद्येन तत्तुव्यवहरन्ति के ॥

परस्यापवादेऽपि सतां महाज्वरः कर्णयोर्भवति । येन स्वस्यापयशो भवेत्तत्के कुर्वन्ति ॥ वाच्या सैव । यत्र परनिन्दापि दुर्वचा तत्र स्वस्याकीर्तिहेतुभूतव्यवहारपरिहार आपतित इति शब्दोपात्तार्थापत्तिरिति सैव वाच्या ॥

10 जह्रौ प्रागुपमानत्वं चरमं चोपमेयताम् ।
यस्य संवर्धमानस्य संपद्भिरमरावती ॥

प्रतीपम् ॥ अधिकगुणत्वसंभावनयोपमानत्वेन कल्पिताऽमरावती गुणानामन्तरपरीक्षणे सति पूर्वमुपमान(त्व)मत्यजत् । पश्चादुपमेयताम् । अतिन्यूनगुणत्वादिति भावः ॥

15 पुरान्तरेषु घनया श्वेतन्ते ज्योत्स्नया यदा ।
तदा नीलन्ति यत्सौधान्यसितागुरुधूम्यया ॥

अन्यनगरे पौर्णमास्यादौ सौधानि श्वेतन्ति श्वेतानि भवन्ति । तत्र तु तदैव कालागुरुधूमेन यत्सौधानि नीलानि

---

* See note on p. 158.

भवन्ति ॥ गुणक्रियासमुच्चयः । नीलनश्वेतनयोर्गुणक्रिययोर्यौग-
पद्यम् ॥

शीलालंकरणं रूपं त्यागालंकरणं धनम् ।
श्रुतालंकरणं मेधा यत्र पुण्यानि शंसति ॥

5 यत्र रूपादीनि शीलाद्यलंकृतानि पुण्यसूचकानि भवन्ति ॥
सद्योगः । रूपादीनां सतां शीलादिभिः सद्भिर्योगात् ॥

सचौरैर्दण्डकक्ष्मापैरवर्षैर्देवमातृकैः ।
निर्धनैर्बहुदुर्भिक्षैर्दुर्जयं तत् पुरान्तरैः ॥

सचौरत्वादिविशेषणविशिष्टैरन्यनगरैस्तज्जेतुं न शक्यम् ॥
10 असद्योगः । पुरान्तराणामसतां चौरादिभिरसद्भिर्योगात् ॥

धर्मो दम्भं लोभमर्थः कामोऽस्थानप्रसक्तताम् ।
मोक्षश्चार्चनवैमुख्यं दिशन् यत्र न दृश्यते ॥

अन्यपुरेषु धर्मादयो दम्भादिकलुषिता दृश्यन्ते । - - - -
- - - - - - - सदसद्योगः । सतां धर्मादीनां - - - - -
15 - - - - - - - - ॥

— — — — — — — — . — — — — — —*

— — — स्य यस्य राज्ञः प्रतिकारसामर्थ्ये सति सत्संबन्धिनां
पराभवात् ॥

* See note on p. 158.

यत्र मेघाः पिधीयन्ते गवाक्षागुरुधूम्यया ।
सौदामिनीभिस्तेषां च हेमहर्म्यमरीचयः ॥

जालनिर्गतकालागुरुधूमैर्यत्र मेघाच्छाद्यन्ते । विद्युद्भिश्च स्वर्णहर्म्यांशवः ॥ मीलितद्वयम् । वस्तुना वस्त्वन्तरनिगूहनात् ॥

5 अभिन्नैकेन्दुभूरिस्त्रीमुखवातायनाः क्षपाः ।
समरामाननाम्भोजदीर्घिका यत्र वासराः ॥

अभिन्नः सदृशः । एकोऽप्रतिमल्ल इन्दुर्येषां तानि । भूरीणि स्त्रीमुखानि येषु तानि वातायनानि यासु ताः क्षपा भवन्ति । समानि रामाननानि येषां तान्यम्भोजानि यासु ता 10 दीर्घिका येषु ते वासरा भवन्ति ॥ सामान्यम् । प्रस्तुतानां मुखानामप्रस्तुतैश्चन्द्रपद्मगुणैः साम्येन कात्स्न्र्योपनिबन्धनात् ॥

मध्येपि शुभ्रः शुभ्राश्मवेश्मरश्मिभरैः शशी ।
यत्र सर्वाङ्गनीलो वा महानीलग्रहांशुभिः ॥

यत्र स्फटिकग्रहरश्मिसमूहैः चन्द्रः कलङ्कस्थानेऽपि शुभ्रो 15 भवति । इन्द्रनीलगृहरश्मिभिः सर्वाङ्गेषु नीलो भवति ॥ तद्गुणः । अन्यदीयसितासितगुणग्रहणात् ॥

न शक्यते यदानेतुं कलिना मलिनात्मताम् ।
तमसा चन्द्रबिम्बं हि सविशेषं प्रकाशते ॥

कलिना यन्नगरं मालिन्यं नेतुं न शक्यते । यतः चन्द्र- 20 स्तमसात्यर्थं शोभते ॥ अतद्गुणः । कलिगुणाननुहारात् ॥

**गृह्णीत त्रिगुणं त्वत्तो न स्यादग्रहणं यदि।**
**प्रत्यादिशन्ति शम्बल्यो यस्मिन्नित्यासकामुकान्॥**

----कुट्टिन्यो य---प्राप्तान् कामुकानिति प्रत्यादिशन्ति निषेधयन्ति। इतिर्हेतौ। यदि तत्कर्तृकं त्वत्कर्मकमग्रहण-
5 ---------त्यजदित्यर्थः। तदा त्वत्सकाशान्मया त्रिगुणं गृह्णीत। परं सा तु त्वां न गृह्णाति। मद्धस्ते त्वया न्यस्तं यद्वस्तु तन्न गृह्णातीत्यर्थः॥ उत्तरम्। अत्र हि उत्तरात् प्रश्न उन्नीयते। कामुकैर्हि कुट्टिणीनामुक्तमेतत्। इदं वस्तु तस्यै देहि। सा मत्समीपं त्वयानीयतामिति। ततः कुट्टिनीभिः
10 पूर्वोक्तमुत्तरं दत्तम्। अस्मादुत्तरात् प्रश्नोन्नयनम्। त्वत्त इति कामुकपरामर्शकमेकवचनं तु प्रत्येकं पृथग्भाषणात्। कुट्टिन्यो हि अभिसारिकाणां गौरवरक्षणार्थं जनानुत्तरयन्ति॥

**कं यत्र पुष्करं गत्वा वरिवस्यन्ति साधवः।**
**कं पुष्कराद्गृहायातं स्पृष्ट्वा शुद्धिं च मन्वते॥**

15 पुष्करं तीर्थं गत्वा साधवः कं ब्रह्माणमुपासते। पुष्करतीर्थाद्गृहायातं कं जलं स्पृष्ट्वा शुद्धिं मन्यन्ते। कमिति प्रश्ने कं ब्रह्माणं कं जलमित्युत्तरं द्वितीयम्॥

**यत्र कर्णोत्पलन्यस्तहस्तां दीपावलोकिनीं।**
**दृष्ट्वा वधूः प्रियोपान्ते सखीभिः प्रतिमुच्यते॥**

20 दीपशमनार्थं कर्णोत्पलेषु न्यस्ता हस्ता यत्रैवं कृत्वा दीपा-

नवलोकयन्ती नारी भर्तृनिकटे दृष्ट्वा सखीभिः प्रतिमुच्यते ॥ सूक्ष्मम् । रिरंसारूपसूक्ष्मार्थप्रकाशनात् ॥

शीतः पाणिरपथ्योयं सद्यो मे निरगाज्ज्वरः ।
यत्र रामा प्रियस्पर्शप्रस्वेदमिति निह्नुते ॥

5 इदानीं मम ज्वरो निर्गतोऽतस्तवायं पाणिः शीतलादपथ्य इत्यनेन वचसा प्रियास्पर्शेन प्रस्वेदं रामाच्छादयति ॥ व्याजोक्तिः । स्वेदेनोद्भिन्नस्य प्रियस्पर्शसुखस्य ज्वरनिर्गमनेन निगूहनात् ॥

मा प्रवेक्ष्यति कोप्यन्तर्मा शब्दः श्रूयते बहिः ।
10 वाक्यं यत्र नवोढानामिति कान्तैर्निगद्यते ॥

नवोढा वक्ति मा हठादिकं कुरु । यतः कोप्यन्तः प्रवेक्ष्यति । तथा मा युङ्क्ष्व यतो बहिः शब्दः श्रूयते । एतदेव कान्ता अनुवदन्ति । मा निषेधं कुरु यतः कोप्यन्तः प्रवेक्ष्यति । काकुप्रयोगेण न प्रवेक्ष्यतीत्यर्थः । मा निषेधं कुरु यतो बहिः
15 शब्दः श्रूयते । काकुप्रयोगेण न श्रूयते इत्यर्थः ॥ वक्रोक्तिः । काकुप्रयोगात् ॥

कोप्यन्तर्मे नते स्नेहः कोपवन्तं त्यजान्तरात् ।
नतोहमिति मानिन्यो रम्यन्ते यत्र कामिभिः ॥

ममान्तः स्नेहस्तव नास्ति । यद्वा त्वत्कर्तृकः स्नेहो मेऽन्त-
20 र्मयि विषयभूतायां न भवतीति मानिनीनामुक्तिः । कामि-

भिस्त्वन्यथा योजनं कृतम्। त्वं ------ कोपवान्। मे मम नते प्रणते स्नेहः इति त्वयोक्तम्। तत् कोपमन्तराच्चित्तात् त्यज। तत्राहं नतः प्रणामकारीत्युक्त्वा कामिभिर्मानिन्यो रम्यन्ते। रश्मिर्णिजन्तः। मे इत्येकवचनमेकैककामिन्यभि-
5 प्रायात्॥ श्लेषेण सैव। सैवेति वक्रोक्तिः॥

यत्र स्तनंधयान् हस्ते रत्नदीपं जिघृक्षतः।
दृष्ट्वा हाहेति संभ्रान्ता धात्री चेटैर्विहस्यते॥

रत्नदीपं हस्ते गृह्णतो बालान् दृष्ट्वा हाहेति वदन्ती संभ्रान्ता धात्री चेटैरुपहस्यते॥ स्वभावोक्तिः॥

10 निपीडितस्य पूर्णेन्दोः सुधया पङ्किलाङ्गुली।
यत्र मृत्युजितः पादौ भाव्येते भावितैः पुनः॥

पीडितस्यासनभूतस्य पूर्णचन्द्रस्यामृतेनार्द्राङ्गुली मृत्युजितो भगवतः पादौ भक्तैः प्रणिधीयेते॥ भाविकम्। अत्यन्त-विप्रकृष्टस्य भगवदङ्गुलिपङ्किलत्वस्य प्रत्यक्षायमाणत्वात्॥

15 च्युतकर्पूरकस्तूरीपांसुला पण्यवीथिका।
कुरुते पाण्डुरश्यामवाससो यन्निवासिनः॥

च्युताभ्यां कर्पूरकस्तूरीभ्यां पांसुला यत्राट्टवीथी। यस्मि-न्निवासिनः पौरान् सितासितवस्त्रान् करोति॥ उदात्तम्। सातिशयसमृद्धिवर्णनात्॥

**पारेसिन्धु विजिग्ये यां मध्येसिन्धु व्यधाच्च याम् ।**
**रामः कृष्णश्च नगरौं ते दास्ये यस्य नोचिते ॥**

समुद्रपारे यां नगरीं लङ्कां रामो जितवांस्तथा समुद्रमध्ये नगरीं द्वारवतीं कृष्णो यां व्यधात् ते नगर्यौ यस्य दास्यत्वयोग्ये न भवतः ॥ द्वितीयमुदात्तम् । लङ्काजयद्वारिकानिर्माणयोर्महापुरुषचरितयोरङ्गभूतत्वात् ॥

**चन्द्रांशुस्मेरधम्मिल्लमल्लिकानां प्रियान् प्रति ।**
**सौधेषु गीतं रामाणां यत्रालिभिरनूद्यते ॥**

चन्द्रांशुभिः स्मेराः शुभ्रतरा धम्मिल्लमल्लिका यासां स्त्रीणां प्रियानुद्दिश्य गीतं सौधेषु सखीभिरनु पश्चादुद्यते गीयते ॥ रसवत् । रतेरङ्गत्वाद्रसवदलंकारः ॥

**सौधेष्विन्दूदये मुग्धाः प्रियमार्गस्पृशो दृशः ।**
**न व्याकुलयितुं भृङ्गा यत्रोत्पलदृशामलम् ॥**

चन्द्रोदये प्रियमार्गवीक्षिणीरुत्पलदृशां दृष्टीर्व्याकुलीकर्त्तुं भ्रमरा नालं शक्ताः । अत्युत्कण्ठयेति भावः ॥ प्रेयोलंकारः । प्रियमार्गवीक्षणशुद्धत्वादौत्सुक्यस्य रत्यङ्गस्य व्यङ्ग्यत्वात् । व्यभिचारि प्रेयस्वि ॥

**प्रलापः शिवभक्तानां श्रूयते यत्र निस्खलैः ।**
**शिवभक्तैर्गृहद्वारं कुर्वद्भि - - - - - - ॥**

- - - - - - - - - - - - - - - - - - - शिव शिवेति

प्रलापहर्षबाष्पेण गद्गदारं पङ्किलं - - - - - - - - - -
- - - - - - - ॥*

- - - - - - - - - - - - - - - - - -

भवतीभिश्चन्द्रोदयेपि कोपो न त्याज्यः । चन्द्रादधिकस्य
5 शृङ्गारोद्दीपकस्याभावार्थोऽपिशब्दः । इत्येवं प्रियहासोऽल्पः
स्त्रीणां कोपे निश्चयमल्पीकरोति । प्रियहासेन रोषः शाम्य-
तीत्यर्थः ॥ समाहितम् । कोपप्रशान्तेरभ्यङ्गत्वमिति ॥

हठेन पादपतनं यत्र रामासु सागसाम् ।
कोपाग्निं दीपयति च प्रसादाम्बु च वर्षति ॥

10 रामासु सापराधानां सबन्धि हठेन प्रणमनं कर्तृ कोपाग्नि
ज्वलयति हर्षं जलं च वर्षति । प्रसादे इति वा पाठः ॥
भावसंधिः । असूयौत्सुक्ययोः रत्यङ्गयोर्भावात् ॥

लटभाभिः स्वयं दत्तं विलासिषु नखक्षतम् ।
दृष्टं विस्मृत्य रत्यन्ते यचैति क्षणविघ्नताम् ॥

15 कामिनां तरुणीभिः स्वयमेव दत्तं तदेव विस्मृतं सद्रत्यन्ते
दृष्टं विघ्नतामेति ॥ भावोदयः । असूयोदयात् ॥

यस्मिन्पराङ्मुखी रक्ता सासुः स्मेरा च योषिताम् ।
सुसखीसाक्षिकं दृष्टिर्भवत्यानमति प्रिये ॥

* See note on p. 158.

रमणीनां प्रिये प्रणमति सति दृष्टिः पराङ्मुखादिष्विहिता स्निग्धसखीसाचिकं भवति ॥ भावशबलता । अमर्षासूयानिर्वेदहर्षाणां शबलत्वात् ॥

**भ्रूभङ्गभङ्गिभिः स्त्रीणां येनाप्ताश्चापराजयः ।**
**कामस्य कामिभिर्यत्र कृतस्तस्य पराजयः ॥** 5

येन कामेन भ्रूभङ्गविच्छित्तिभिर्हेतुभिश्चापानां राजयः पङ्क्तयः प्राप्ताः । तस्य कामस्य कामिभिः पराजयः कृतः ॥ अनुप्रासयमकयोः संसृष्टिः ॥

**केलीकोकिलकाकल्याः कल्याः कान्तागिरो जये ।**
10 **यत्र कामयमानानां नानाङ्गं सुवते सुखम् ॥**

यत्र प्रियाणां वाचः कामयमानानां कामिनां नानाविधं सुखमुत्पादयन्ति । केलीकोकिलानां काकली क - - - - - - जये कल्याः कुशलाः ॥ तयोरेव संकरः ॥

**कर्पूरविपणी यत्र सर्वस्मि - - - - - - - - - ।**
15 **- - - - - - - - - - - - - - - ॥***

- - - - - - - - - - - - - - - - - - - - - - - स्थानेनामरावतीन्दुनगरी भूरि सौभाग्यं स्पृशति । समगुणेति तात्पर्यम् । या च स्त्री पुरुषायितवृत्तिः सात्यर्थं सुभगा ॥

* See note on p. 158.

समासोक्त्युत्प्रेक्षासंकरः । स्पृशतीति संभावनतात्पर्यादार्थ्युत्प्रेक्षा । नायिकाव्यवहारारोपाच्च समासोक्तिः ।

एवंविधामजयमेरुगिरेः प्रतिष्ठां
कृत्वा सकौतुक इवाजयराजदेवः ।
5 दोर्वीर्यसंहृतनयं तनयं विधाय
सिंहासने त्रिदिवमीक्षितुमुच्चचाल ॥

एवंविधामजयमेरुनगरस्य प्रतिष्ठां कृत्वा स्वर्गदर्शनार्थं कौतुकीव । नगरान्तरलाभार्थमिति भावः । भुजबलमि-(मी)लितनीति पुत्रं सिंहासने कृत्वा चलितः ॥

10 अर्णोराजोथ सादाशिवमनिशमनुध्याय रूपं प्रसन्ना-
दस्मादत्रैव जन्मन्यतुलबलमिव प्राप्तपञ्चाननत्वम् ।
सर्वोर्वीपुण्डरीकप्रकटविघटनोन्मत्तमातङ्गराज-
त्रासायासावतारव्यवसितमकरोत् पुष्करक्षेत्रमेकम् ॥

अथार्णोराजः सदाशिवसंबन्धि रूप ध्यात्वा प्रसन्नादस्मात्
15 सदाशिवादस्मिन्नेव जन्मनि बहुबलमिव पञ्चाननत्वं शिवत्वं पञ्चवक्त्रत्वं च प्राप्यैकमप्रतिमल्लं पुष्करक्षेत्रं समस्तभूमौ पुण्डरी-काणां क्षत्राणां प्रकटं विघटनेनोद्धतानां मातङ्गराजानां म्लेच्छानां त्रासायासोत्पादने व्यवसितं शक्तमकरोत् । व्यवहित-मिति पाठो नार्षः । सिंहस्य पुण्डरीकाणां व्याघ्रविशेषाणां
20 विघटनादधिकमुद्धतानां हस्तिनां भयमुत्पादयतीति भद्रम् ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन स जोनराजः ।
सर्गं चिराद्व्यधित पञ्चममस्मि - -
- - - - - - - भिधकाव्यराजे ॥ १ ॥

5 श्रीश्रीकण्ठचरित्रकाव्यविवृतौ - - - - -
- - - - - - - - - - - - - - - - ।
- - - - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - ॥ २ ॥

इति पृथ्वीराजविजये पञ्चमः सर्गः ॥ ५

# षष्ठः सर्गः



*

\- - - - - - - - - - - - - - - - - - - - - - ।

\- - - - - - - - - - - - - - - - - - - - - - समीयु-

र्भयं तदेवाजयमेरुनार्यः ॥

5 प्रथमं चन्द्रस्य राज्ञ्णा ग्रहे ग्रासे सति चन्द्रलोके दाक्षाय-
णीनां ताराणामश्विन्यादीनां यद्भयमासीत् तदेव तत्सम-
मित्यर्थः । दुर्गाङ्गनाः प्रापुः । विषमे हस्तः श्रवणं च नक्ष-
त्रम् । हस्तः करः श्रवणं कर्णौ यासां ताः ॥

रजोभिरेव प्रतिभानभङ्गे
10 पूर्वस्य पुंसस्तरणेः प्रवृत्ते ।
निर्गत्य सोष्मा विदधे स दोष्मा-
नौर्वाग्नितां तत्कटकार्णवस्य ॥

अर्णोराजस्य पूर्वः पुमानादित्यः । तस्य रजोभिरेव
प्रकाशनाशे जाते सोष्मा दृप्तो दोष्मान् भुजशाली स अर्णो-
15 राजोऽजयमेरुतो निर्गत्य तुरुष्कसैन्यसमुद्रस्य वडवाग्नि-
तामकरोत् । तत्कटकमशोषयदित्यर्थः ॥

* A lacuna of about a verse or two with com

पराङ्मुखी यत् पृतना प्रपेदे
जनङ्गमानामसुभिर्वियोगम् ।
स रौरवाणां सुवसत्वकालो
भाग्यानि वा भास्करमण्डलस्य ॥

5 जनङ्गमानां म्लेच्छानां पृतना सेना प्राणैर्वियोगं पलायमाना सती यत् प्राप्ता स रौरवाणां नरकविशेषाणां सुवसत्वकालः सूर्यमण्डलस्य वा भाग्यानि भवन्ति । यदि हि म्लेच्छा रणे संमुखा म्रियेरंस्तदार्कबिम्बं भित्वा गच्छेयुः । न त्वेवमतो नरके पतिताः ॥

10 दोःशालिनामाजयमेरवाणां
यल्लोहघातैः करणीयमासीत् ।
भारायमाणैर्निजवर्मलोहै-
स्तदन्वभूवन् बहवस्तुरुष्काः ॥

अजयमेरुभवानां भटानां शस्त्राघातैर्यत्कर्तव्यमासीत्तन्द्भारी-
15 भूतैरायसकवचैर्बहवस्तुरुष्काः प्रापुः । निजकवचभारैरेव मृताः इत्यर्थः ॥

पुरो गतानामसवो निरीयुः
पिपासया ये मरुधूलिमध्ये ।

तैरेव सा - - - - - - -

- - - - - - - - - - - - - ॥*

- - - - - - - - - - - - - - -

- - - - - - - - - - ।

5 - - - - - - - घतस्कराढ्ये

सुखेन पाथेयमिवात्तवद्भिः ॥

अश्वग्रीवास्त्रायुधप्रहारं दत्वा शोणितं वमद्भिः कैश्चिन्मृतम्। भावे क्तः। अत्रोत्प्रेक्ष्यते। पापचौरसंकुले नरकमार्गे पाथेयमिव गृह्णद्भिः। चौरबहुले च लोकः पाथेयं गृह्णाति ॥

10 मरुस्थलीवालुकयाप्यधत्त

काँश्चिद्विपन्नाँल्लुठतः पृथिव्याम्।

संस्कारमात्मोचितमन्तकाले

प्रवर्त्तयन्ती कृपयेव वात्या ॥

मृतान् भूमौ लुठतोऽन्यान् वातसमूहो मरुसिकतयाच्छा-
15 दयत्। अत्रोत्प्रेक्ष्यते कृपया हेतुभूतया यवनोचितं प्रेतसंस्कारं भूमिनिखननलक्षणं प्रवृत्तयन्तीव ॥

दृष्ट्वा स्थितान् कांश्चन राजमार्गे

ग्राम्याः शवान् गन्धभयेन हुत्वा।

* A lacuna of about a verse or two with com.

तुरुष्कमांसस्य चिराद्रसज्ञं
क्रव्यादमग्निं रचयांबभूवुः ॥

राजमार्गमावृत्य स्थितान् कांश्चन शवान् गन्धभयेन हुत्वा
ग्रामिणः क्रव्यादमसंस्कृतमग्निं तुरुष्कमांसस्यास्वादज्ञं चिराच्चक्रुः ॥

5 बभूव यावानवनेः पुरस्ताद्
भारस्तुरुष्कैर्व्यसुभिर्लुठद्भिः ।
तावानभून्मेदुरितोदरीणां
तत्पारणाद्धारणतः शिवानाम् ॥

तुरुष्कैर्गतप्राणैर्लुठद्भिः पूर्वं भूमेर्यावान् भारोऽभूत् तावानेव
10 भारस्तत्पारणात्तुरुष्कग्रसनात् पीवरोदरीणां जम्बुकीनां धार-
णतोऽभूत् । पारणशब्दो भक्षणे वर्तते । तुरुष्कभक्षणे निवृ-
त्तस्य भारस्य शिवामेदुरत्वात्पुनरुदयः ॥

असूचि तेषां विशतामुलूकैः
सपादलक्षं यदमङ्गलं प्राक् ।
15 तत्तत्पलास्वादननिवृ(द्द)तस्य
भद्रं बभाषे बलिभुक्कुलस्य ॥

सपादलक्षं नाम देशविशेषं विशतां म्लेच्छानाममङ्गल-
मुलूकैः कौशिकैर्यत्सूचितं तदमङ्गलमेव कर्तृ काक(कुलस्य)
शुभमसूचयत् । यतो मृतम्लेच्छमांसग्राससुखितस्य । आसाद-
20 नेति पाठो नार्षः - - - - - ॥ .

- - - - - - - - - - - - रौति-

परस्परस्याप्सरसो ह्यसन्त्यः ।

अनङ्गमैर्मूर्धभिरर्ध - - -

- - - - - - - - - - - - - ॥*

5 — — — — — — — — — — — — — तिस्ते यत्र कथा-
मात्रमपि नाकुर्वन्निति । पान्थेष्विति यस्य च भावेन भाव-
लक्षणमिति सप्तमी । पान्थाः कथामत्यजन् गृह्वादयस्त्वकुर्व-
न्निति तात्पर्यम् ॥

पविचिता वीररसेन धात्री

10 मुहूर्तमात्रं नृपसैनिकानाम् ।

चाण्डालकीलालमलीमसे तु

चिरस्य बीभत्सरसे ममज्ज ॥

राजसैन्यानां वीररसेन कर्त्री भूमिर्मुहूर्तमात्रं पवित्रीकृता ।
तुः पक्षान्तरे । म्लेच्छरक्तैरशुचौ बीभत्सरसे चिरममज्जत् ॥

15 हृतप्रसादीकृतनष्टशिष्ट-

प्रविष्टतौरुष्कतुरंगमापि ।

सेना चकाराजयराजसूनो-

रुच्चैःश्रवस्सर्गमयीरिवाशाः ॥

* A lacuna of about a verse or two with com.

राजःसेना दिशः सर्वा उच्चैःश्रवस्स्वर्गप्रकृतिरिव व्यधात् । हताः प्रसादीकृता नष्टाश्च तेभ्यः शिष्टाः प्रविष्टास्तौरुष्कास्तु-रंगमा यस्यां सा । तुरुष्कवाहापहरणात्तत्सेना दिशोऽजैषीदिति भावः । उच्चैःश्रवा एक एव स च स्वर्ग एवास्ति । तत्सेना तु
5 वराश्वबाहुल्यादहुसंख्योच्चैःश्रवःसहिता दिशोपिव्यधादित्यपि-शब्दस्यार्थः । यद्वा हतादिभ्यः शिष्टत्वादल्पप्रविष्टाश्चापि दिशोऽनेकोच्चैःश्रवःसहिता श्र — — — — — ॥

भीत्या विना कस्य न सुप्रवेश-
मुपक्रमे यत्समरस्य जज्ञे ।
10 भाग्यैर्विना कस्य न च प्रवेष्टुं
साध्यं न तत्पार्थिवसैन्यमासीत् ॥

रणारम्भे यद्राजसैन्यं भीत्या विना कस्य न सुप्रवेशमभूत् । भीतिरेव यत्र सैन्ये न प्रविष्टा । अन्ये तु सर्वे तुरुष्काः प्रविष्टा इत्यर्थः । तद्राजसैन्यं कस्यापि प्रवेष्टुं साध्यं नासीत् ।
15 कैर्विना । भाग्यैर्विना । भाग्यान्येव समरान्ते प्राविशन्नन्ये तु तुरुष्का हता इत्यर्थः । हत्वा तुरुष्कांस्तद्धनं प्राप्तमित्यर्थः । यद्वा निर्भयस्य कस्य न सुप्रवेशमिति यज्जनैर्जज्ञे ज्ञातं तद्राजसैन्यं भाग्यानि विना कस्यापि न प्रवेष्टुं शक्यमिति ॥

एकैकमु - - - - - - - -
20 - - - - भर्तरि वाभिधातुम् ।

संप्रेषिते - - - - - - - -

- - - - - - - - - - - -॥*

- - - - - - - - - - - - - - - - - -

- - - - - - तथा परकटकं भिद्धवत्प्रविष्टा इत्यर्थः ।

पौरस्तुत्यमृतपूर्णकर्णास्मादिनोऽग्रोभन्त ॥

नृपः पताकासिचयप्रपञ्च-

संचारिचित्राम्बरभूषणायाम् ।

अलोठयित्वैव नवीकृतायां

पुण्यामपूर्वां श्रियमीक्षते स्म ॥

10 ध्वजवस्त्राण्येव संचारि चित्रं यस्य तदम्बरं भूषणं यस्यां तत्रालोठयित्वैव लोठनेन विनैव नवीकृतायां नगर्यां स शोभां दृष्टवान् । अनुमारणान्नगर्या नवीकरणम् ॥

महोत्सवः क्ष्मापतिना सुलग्ने

न ज्ञायते कुत्र स सूचितोभूत् ।

15 अद्यापि यो रुद्धतुरुष्कयात्रां

तथैव सर्वामवनीमुपास्ते ॥

योऽद्यापि म्लेच्छानां यात्रां रुद्धवान् सर्वां भुवं च व्याप्नोति स महोत्सवो राज्ञा कस्मिन्नपि शोभने स्थिरे लग्ने प्रारब्धोऽभूत् । शोभनलग्न एवारब्धस्य स्थैर्योपपत्तेः ॥

---

* A lacuna of about a verse or two with Com

व्यापादि यस्मिन्नपवित्रसेना
स भूप्रदेशश्चिरकालमासीत् ।
कङ्कालिकाकालिसृगालमाला-
मेलापकोलाहलकेलिरौद्रः ॥

5 सा चाण्डालसेना यत्र मारिता तत्स्थानं कङ्कादिरौद्रं जातम् ॥

विशुद्धिहेतोरथ तस्य राजा
घ्राणेन्द्रियाकस्मिकरौरवस्य ॥
अकारयत्कीर्तिपटीपिनद्ध-
10 क्षीरोदनग्नंकरणं तटाकम् ॥

नासाया आकस्मिकरौरवाख्यस्य नरकविशेषस्य । उद्वेगोत्पादकदौर्गन्ध्यातिशयादिति भावः । तस्य म्लेच्छमारणस्थानस्य शोधनार्थं स राजा तटाकमकारयत् । कीर्तिरेव पटी तया पिनद्धस्य वलितस्य क्षीरोदस्य नग्नंकरणम् । क्षीरसमुद्रादधि-
15 कमित्यर्थः । अधिकस्य हीनं जयन् पटीं हृत्वा नग्नं करोति । नग्नपलितेत्यादिना - - - - - टि नग्नंकरणशब्दस्य रूपम् ॥

तत्तुङ्गमातङ्गघटास्थिकूटा-
वि - - - - - - - - ।
- - - - - - - - - -
20 - - - - - पीडां मनुते स्म भू- ॥*

* A lacuna of about a verse or two with Com.

या पुष्करारण्यविहारशीला
मन्दाकिनीवेन्दुनदी प्रसिद्धा ।
भगीरथः सिन्धुमिव स्रवन्त्या
तया तटाकं तमपूरि देवः ॥

पुष्करमरण्यमाकाशं च तत्र संचारिणी या चन्द्रनदी गंगेव प्रसिद्धा तया नद्या स राजा तं तटाकमपूरयत् । पूरेर्णिजन्तस्य लुङ्यपूरीति रूपम् । भगीरथः समुद्रमिव ॥

पयोभिरीशानकिरीटचन्द्र-
पेयूषगर्भैः परिपूरितोपि ।
10 क्षारत्वमापत्सगरात्मजाना-
मपुण्यलेशादिव वारिराशिः ॥

हरमौलिचन्द्रसुधामिश्रैर्जलैः पूरितोपि समुद्रः सगरपुत्राणामभाग्यवशादिव क्षारत्वं प्रापत् । दोषादिवेत्यार्षः पाठः ॥

पुण्यास्तु तस्याजयराजसूनोः
15 को वेदितुं तत्त्वगतीरभिज्ञः ।
शाकंभरीक्षेत्रगतोपि यस्य
क्रीडासमुद्रः सचिवः सुधायाः ॥

राज्ञः पुण्यानां परमार्थं ज्ञातुं को विदग्धः । यस्य क्रीडाब्धिः क्षारस्थलस्थोपि सुधायाः सदृशः ॥

नाम्ना पितुर्वारुणवाणलिङ्ग-
प्रासादमुत्तुङ्गमकारयद्यत् ।
वारां विवृद्ध्यर्थमिवागतोसौ
हिमालयस्तत्सरसो विभाति ॥

5 पितुरजयराजस्य नाम्ना स वारुणवाणलिङ्गसहितं प्रासादं यदकारयत्तदसौ प्रासादकरणविधिः सरसो जलानां वर्द्धनार्थमिवागतो हिमालयो विभाति ॥

तद्वाणपूजागतपाशिहस्त-
स्तैरिवानन्दितघूर्णितत्वात् ।
10 नागैर्नगर्यामपि संनिधानं
व्यधायि तेन ह्रदनिर्भरा भूः ॥

हर्षघूर्णनाद्धेतोस्तद्वा - - - - - - - - - - - -
- - - - - - - - - - - - - - - ॥*

- - - - - - - - - - - - - - - सोकेन किं
15 भवति । इदमेव सारमिति भावः । यानि देवगृहाणि पूर्वं जातानि यैस्याग्रे भविष्यते तेषां स एव । न पुनर्देवगृहनिर्मातारः । प्रतिष्ठाफलं प्रापत् । कुतः । तुरुष्काणां याचायः विघातात् । यदि हि स राजा तुरुष्कान्न विहन्यात्ते तुरुष्का देवगृहध्वंसं कुर्युरिति भावः ॥

* A lacuna of about a verse or two with Com.

अवीचिभागो मरुभूमिनामा
खण्डो द्युलोकस्य च गूर्जराख्यः ।
परीक्षणायेव दिशि प्रतीच्या-
मेकीकृतौ पाशधरेण यौ द्वौ ॥
5 तयोर्द्वयोरप्युदिते नरेन्द्रं
तं वव्रतुस्तुल्यगुणे महिष्यौ ।
रसातलस्वर्गभवे इव द्वे
त्रिलोचनं चन्द्रकलाविसर्गे ॥ युगुलम् ॥

मरुसंज्ञितोऽवीचिनामनरकैकदेशस्तथा गूर्जरनामा स्वर्गखण्ड
10 इति द्वौ खण्डौ पश्चिमदिशि वरुणेन परीक्षार्थमिव स्थापितौ
यौ तयोर्द्वयोर्मरुगूर्जरयोरुत्पन्ने समगुणे राज्ञ्यौ वव्रतुः । यथा
भूतलस्वर्गोत्पन्ने चन्द्रकलागंगे परमेश्वरं वव्रतुः ॥

पूर्वा तयोर्नाम कृतार्थयन्ती
तं प्राप्य कान्तं सुधवाभिधाना ।
15 सुतानवापत् प्रकृतेः समानान्
गुणानिवान्योन्यविभेदिनस्त्रीन् ॥

तयोर्महिष्योर्मध्यात् पूर्वा ज्यायसी सुधवा नामा तं कान्तं
लब्ध्वा नाम सार्थकं कुर्वती त्रीन् पुत्रान् समबलानन्योन्यभिन्नान्
गुणभिन्नांश्च प्रापत् । अतः संभाव्यते । प्रकृतेर्गुणान् सत्त्वरजस्त-
20 मांसीवेति । तानि च समान्यन्योन्यभिन्नानि च भवन्ति ॥

एको दशग्रीव इवाचकाङ्क्ष
पितुर्विरुद्धं व्यवहृत्य नाशम् ।
अन्येन बाल्येपि न कुम्भकर्ण-
न्यायेन नामाप्यत - - - - - ॥
5 (आसीत्तृतीयस्तु) मधुद्विषोंश-
स्तत्त्वोन्नतो विग्रहराजनामा ।
महाबला - - - - - - - -
- - - - - - - - - - - ॥ युगलम् ॥*

- - - - - - - - - - - - - - - - - - - - -

10 गूर्जरेन्द्रो जयसिंहस्तस्मै यां दत्तवान् सा काञ्चनदेवी रात्रौ च दिने च सोमं सोमेश्वरसंज्ञमजनयत् ॥

उत्पत्स्यते कंचन कार्यशेषं
निर्मातुकामस्तनयोस्य रामः ।
सांवत्सरैरित्युदितानुभावं
15 मातामहस्तं स्वपुरं निनाय ॥

कंचित्कार्यशेषं संपादयितुमस्य पुत्रो राम उत्पत्स्यते इति ज्योतिर्विद्भिः कथितमाहात्म्यं तं सोमेश्वरं मातामहो निजनगरमनयत् ॥

* A lacuna of about a verse or two with Com

सर्वप्रकारं खलु संमुखोपि
तस्यानुरूपं तनयं विधाता।
विधातुमल्पप्रतिभो यदासी-
त्ततो न तं सान्वयतां निनाय॥

5 सर्वथाऽनुकूलोपि विधिस्तस्य सदृशं पुत्रं कर्त्तुमनभिज्ञो ध्रुवं यदासीत्ततो राजानं सपुत्रतां नानयत्॥

चतुर्मुखत्वे सदृशे विरिञ्चा-
द्विष्णोरलूनाननता विशेषः।
देवस्तु पञ्चाननताविशिष्टः
10 षडाननत्वं गुहमानिनाय॥
प्रकृष्टतामभ्यधिकामतोपि
स्रष्टुं पटुर्न ध्रुवमीश्वरोपि।
अतः कुमारं विदधे कुमार-
मैच्छन्न तन्न्यूनसमान्ववायम्॥ युगलम्॥

15 विरिञ्चाद्ब्रह्मणः सकाशाद्विष्णोरलूनमुखता कर्त्तौ विशेषो भवति। चतुर्मुखत्वे समेपि सति। तथा चतुर्मुखस्य विष्णोः सकाशात् पञ्चाननत्वेन महेश्वरोधिकः। स च स्वपुत्रं कुमारं षण्मुखत्वमनयत्। अतोपि कुमारादपि प्रकर्षं कर्त्तुमीश्वरोपि ध्रुवमसमर्थः। अतः कुमारमेव ब्रह्मचारिणं कृतवानित्यर्थः। 20 महेश्वरः कुमारं न्यूनोऽथवा समोऽन्ववायः पुत्रो यस्य तं नैच्छत्॥

इत्थं विविञ्चन्नृपतिः सम -

- - - - - - - - - - - ।

- - - - - - - - - - - -

- - - - - - - - - - - ॥*

5 - - - - - - - - - - - - - - - - - - -

- - - - कर्मसु धूर्जटिमीश्वरम् ॥

भविष्यतानेन विमानदातु-

र्हातुं धनेशान्नरयानलज्जाम् ।

रामस्य पित्रा दुहितुः सुतेन

10 सुतेजसा नन्दतु चक्रवर्ती ॥

धनेशाद्वैश्रवणान्नरयानेन नरस्कन्धादिरोहणेन लज्जां हातु त्याजयितुमिव विमानदातुः पुष्पकाख्यविमानप्रतिदायिनो रामस्य पित्रा भविष्यतानेन दौहित्रेण चक्रवर्त्ती तुष्यतु । जहातिरन्तर्भावितण्यर्थः ॥

15 श्रुत्वेति दौहित्रमुखारविन्द-

लावण्यलक्ष्मीसहवासमत्ताम् ।

विधाय दृष्टिभ्रमरीं कथंचित्

तत्संमुखीं भूपतिराबभाषे ॥

* A lacuna of about a verse or two with Com

दौहित्रमुखपद्मलावण्यसमृद्धिसहवासेन मत्तां दृष्टिभ्रमरीं तस्य दैवज्ञस्य संमुखीं कृत्वा राजावदत् ॥

'अश्रौषमेवं बहुधा बहुभ्यः
संदेहगेहं च मनो ममाभूत् ।
5 तदस्ति किंचिन्न हि जीवलोके
प्रियंवदानां न यदीरणीयम् ॥

बहुभ्यः सकाशाद्बहुधा चाहमेवं श्रुतवान् । मम मनस्तु संदेहस्थानमेवाभूत् । चाटुकाराणां न किंचिदवाच्यं यतः ॥

षाड्गुण्यमन्त्री परमार्थतस्तु
10 प्रजापतेस्त्वं प्रतिभाससे मे ।
ललाटपट्टेषु कृतो नराणां
त्वं तेन लिप्यक्षरसूत्रधारः ॥

विधातुः षाड्गुण्ये सृष्टिविषये व्यवहारे मन्त्री उपदेष्टा त्वं भवसि । त्वमेव प्रजापतेः सुखदुःखलेखनोपदेशं करोषीत्यर्थः । 15 यद्वा प्रजापतिना त्वं लिपिलेखकरः कृतः । त्वमेव लिखसीत्यर्थः ॥

आज्ञां त्वदीयामथवा - - -
शरीरभाजां प्रसवप्रसङ्गे ।
ज्योतींषि तीक्ष्णांशुमुखान्यमूनि
- - - - - - - - - ॥

- - - - - - - - - - णिनां जन्मकाले त्वदाज्ञा-

नुसारं सूर्यादिग्र - - - - - - - - ॥*

- - - - - - - - - - -

- - - - - - - - - - -।

5 - - - - - - - - - - -

- - - - भरणान्तराणि ॥

संशय वंशस्तच्छिदं कृत्वा मुक्तारत्नसममुक्तं वन सूच्यतामुच्यतामतः । यथा संदेहो न भवति तथा कथयेत्यर्थः । यद्वा व्यादाय(?)स्वपित्यादिष्विदं द्रष्टव्यम् । मम मे हृदये स्थितेन
10 येन भूषणान्तराणि त्याज्यत्वं प्राप्नुयुः । त्वद्वचनमेव भूषणभूतं हृदि धारयामीत्यर्थः ॥

संदेहबीजमाह—

इदं हि तद्व्योमनि चित्रकर्म
मरुस्थले श्रीसहजस्तरुर्वा ।
15 सूर्योदयो वा भूजगेन्द्रलोके
कलौ युगे यद्भुवि कैटभारिः ॥

हिर्यस्मादर्थे । कलिकालेपि विष्णुर्भूमौ यदवतरति तदिदमाकाशे चित्रं भवति । मरौ पारिजातो भवति । सूर्योदयो वा पाताले भवति । अतो मम संदेह इत्यर्थः ॥

* A lacuna of about a verse or two with Com-

कस्याश्च पुण्यानि तथाविधानि
प्रादुर्भवेयुश्चरमे युगेस्मिन् ।
यस्याः करिष्यत्युदरं पवित्रं
गंगाभुजंगादपि शार्ङ्गपाणिः ॥

5 इदमपि संशयबीजम् । हरिर्यस्या उदरं समुद्रादपि पवित्रं करिष्यति तस्याः कस्याः कलावपि पुण्यानि तथाविधानि भवन्ति । यैः संस्करिष्यत्युदरमित्यार्षः पाठः ॥

आरुह्य संकल्पविकल्पतल्पं
जल्पन्तमित्थं जयसिंहदेवम् ।
10 स्मित्वा विधातेव स मन्युमूर्ति-
र्मौहूर्तिकः स्फूर्त्तिमदित्युवाच ॥

संकल्पाश्च विकल्पाश्च तदेव तल्पमाश्रित्य पृच्छन्त जय-सिंहदेवं मौहूर्तिको ज्योतिर्विन् मन्युमूर्त्तिः प्रजापतिरिव किंचिद्विहस्योर्जितमेवमवोचत् ।

15 दशावतारानुकृतिप्रगल्भैः
पुरा मुरारेर्दशभिः शिरोभिः ।
दिङ्माच - - - - - - - -
- - - - - - - - - - - ॥*

* A lacuna of about a verse or two with Com.

- - - - - - - - - - - - - -

- - - - - - - - - - - तस्थे ।

तामुज्जहार त्वरितं स दृष्टिं

सर्वंसहां कोसलराजपुत्र्याः ॥

5 शोकाग्निना पीतेपि वृद्धिं गच्छति बाष्पसमुद्रे - - त्वा यासीत् तां कौसल्याया दृष्टिं सर्वंसहां शोकसहां स उद्धृतवान् । सर्वंसहां भूमिं च हरिरुद्धृतवान् ॥

जीमूतकेशत्वदशोपपन्न-

सौदामनीसोदरपिङ्गलिम्ना ।

10 ममार्ज बाष्पाम्बुनिपातपाण्डू

पादौ जटानां पटलेन चास्याः ॥

जीमूतकेशत्वदशयोपपन्नः सौदामनीसोदरः पिङ्गलिमा यस्य तेन । विद्युत्कपिशेनेत्यर्थः । बाष्पजलपाण्डू मातुः पादौ रामो जटापटलेन शोधितवान् । प्रणामं कृतवानित्यर्थः ॥

15 रामप्रणामानुपदं विमुक्तं

प्रणम्य सुग्रीवविभीषणाभ्याम् ।

तत्पादमेकं पवमानसूनु-

रन्यं सुमित्रातनयो ववन्दे ॥

रामस्य प्रणामानन्तरं सुग्रीवविभीषणाभ्यां प्रणम्य मुक्तमेकं

20 कौसल्यायाः पादं हनुमान् अन्यं लक्ष्मणो वन्दितवान् ।

त्वं मे महर्षे बहुमानभूमि-
रलं प्रणम्येतिससंभ्रमायाम् ।
पादौ जनन्यामुपसारयन्त्यां
जटाधरो लक्ष्मण इत्युवाच ॥

5 तपोधन मम त्वं बहुमानपात्रं भवस्यतः प्रणम्यालम् । मा प्रणामं कृथा इति सभ्रमसहितायां मातरि पादौ संवृण्वत्यां सत्यां लक्ष्मण एवमवोचत् ॥

आर्यस्य कान्तारविहारकेला-
वहं सपादानु - - - - ।
10 समन्वयातः क्षणमेव दृष्ट्या
विधीयतां मातरनुग्रहो मे ॥

आर्य - - - - - - - - - - - - -
- - - - - मनया दृष्ट्या हे मातः - - - -
- - - - - - ॥*

15 [कौसल्य]यालक्ष्यत लक्ष्मणस्य
पौलस्त्यशक्तिप्र - - - - ।
ज्येष्ठानुरागाख्यनिधानकोशे
मुद्रानिवेशो निहितो हृदीव ॥

* A lacuna of about a verse or two with Com

ततः कौसल्यया हृदि सूक्ष्मं मेघनादपातितशक्तिव्रणचिह्नं लक्ष्मणस्य लक्षितम् । अतः संभाव्यते श्रीरामविषये स्नेहनाम-निधिकोशे न्यस्तो मुद्रानिक्षेप इव ॥

किमेतदित्याकुलया स्पृशन्त्या
पृष्टोपि मात्रा न स किंचिदूचे ।
द्रोणाचलेन्द्रोद्धरणोद्धुरोपि
नेमे च लज्जातिभरात्कपीन्द्रः ॥

व्रणं स्पृशन्त्या व्याकुलया मात्रा किमेतदिति पृष्टोपि लक्ष्मणो न किंचिदुक्तवान् । व्रणरप(णारोप ?)णौषध्यानयनार्थं द्रोणाख्यपर्वतोद्धरणेनोद्धुरोपि हनुमांल्लज्जाभरादनमत् । मयि सत्यनेनायोधीति लज्जाभरः ॥

यथाऽभवत्तस्य च शक्तिपातो
धान्वन्तरिर्वायुसुतो यथा च ।
वितत्य रामेण तथा समस्तं
मातुः पुरस्तात्प्रतिपाद्यते स्म ॥

लक्ष्मणस्य शक्तिपातो यथाभूद्यथा च हनुमान् विशल्यीकरणे धान्व(न्त)रिरासीत्तथा स प्रकारः समस्तं विस्तरेण मातुरग्रे रामेण प्रतिपादितम् ॥

स्तुतिर्जगत्प्राणसुतस्य केयं
जागर्ति यत्प्राणयितुं जगन्ति ।

हरिस्तथा भाति न कौस्तुभेन
यथामुना लक्ष्मण लक्ष्मणा त्वम् ॥

जगन्ति प्राणयतीति जगत्प्राणो वायुस्तस्य सुतो हनुमांस्तस्येयं
का स्तुतिः । यज्जगज्जीवयितुं हनुमान् जागर्ति । एतेन न
5 केवलं हनुमता लक्ष्मणः प्राणितो यावज्जगन्त्यपि लक्ष्मणवत्प्रा-
णयतीति प्रतिपादितम् । कार्याणां - - - - - - - लक्ष्मणे
प्राणिते रामस्य - - - - - - - जीवनार्थं य - - - - -
- - - - - - - - - - - - - - ॥*

- - - - - - मित्येवाह त्वयोदरस्थेन यतः पवित्रजन्म- -
10 - - - - - - - - - - - - - ॥

कौसल्यया भाषितमित्यवेत्य
देवोपि - - - - - - - - - ।
- - - - - मनुजस्य सेवा-
मनुस्मरन् वाक्यमिदं बभाषे ॥

15 लीलयात्तो मनुष्यभावो येन स देवो रामः कौसल्ययोक्तमेवं
श्रुत्वान्येन कर्तुमशक्यां लक्ष्मणस्य सेवां स्मरन्निदमवोचत् ॥

मातर्मृषा प्रार्थयसे त्वमेवं
भवादृशीनां न हि तत्त्वमेतत् ।

* A lacuna of about a verse or two with Com.

देवी भवानी किमु कार्त्तिकेय-
गाङ्गेययोः किञ्चिदवैति भेदम् ॥

हे मातस्त्वमेवं मृषा याचयसे त्वादृशीनामेतन्न युक्तम्। रामो मदीयो लक्ष्मणोन्यदीयो इति। यतो गौरी कुमार-
5 हेरम्बयोर्भेदं न जानाति ॥

आशंसनीयं तु ममेदमस्ति
यथाग्रजं मामनुजः सिषेवे।
तथाहमस्यानुजतामुपेत्य
सेवाविधानात् कृतनिष्क्रयः स्याम् ॥

10 मम त्वेतदाकाङ्क्षणीयं यथा मामग्रज लक्ष्मणोनुजः सेवितवानेवं लक्ष्मणस्यानुजो भूत्वा सेवनात् कृतर्णमुक्तिः स्याम्। आशंसनीयमिति पाठोनार्षः ॥

एतस्य सेवां च चिरस्य कृत्वा
भावान् विदित्वा क्षणभङ्गिनोमून्।
15 अनेन जूटस्य भरेण खिन्नः
काषायधारी भवितास्मि मुण्डः ॥ तिलकम्।

लक्ष्मणस्य सेवां चिरं कृत्वा। तथामून् पदार्थान् क्षणनश्वरान्निश्चित्य जूटभरेण खिन्न इवाहं काषायधारी मुण्डः भविता मुण्डत्वभावेनाहं स्याम्। बुद्धदर्शने हि काषायं वसनं
20 मुण्डत्वं च धर्मः ॥

श्रोतृप्रविष्टादिति भूतधात्री-
जामातृवाक्याद्विनयावनम्रः ।
उन्निद्रकीर्तिस्तबकैकचैत्रः
सौमित्रिरित्थं कथयां चकार ॥

5 उन्निद्राणां कीर्तिस्तबकानामेकश्चैत्रः कीर्तिं विकाम-
यितेत्यर्थः । श्रुताद्धरणीजामातू रामस्य वाक्याद्धेतोर्विनयावनम्रो
लक्ष्मण एवमवोचत् ॥

पाथः कणाः पद्म - - - -
- - - - - - - - - - ।
10 - - - - - - भयादयं मे
सह - - - - - - - ॥*

- - - - - - - - - -
- - - - - - - ।
- - - - - - - - - -
15 - - भविष्यामि सहस्रमूर्धा ॥

अन्येन भोगेन मम शोभा नास्ति अतोऽहमीदृशं भोगिल-
मपेत्वं भोगभात्क च प्राप्नुयाम् येन लत्पादपवित्रां भूमिं स्पृ-
सहस्रं मूर्ध्नां शिरसां फणानां च यस्य स स्यामित्यत्यादरद्योत-
नम् । शेषो भवेयमित्यर्थः ॥

* A lacuna of about a verse or two with con

इत्थं महीनाथ कथानवद्या
पूराभवद्या पुरतो जनन्याः ।
स्नेहानुबन्धादपि दाशरथ्योः
पफाल तस्यां प्रथमस्य वाक्यम् ॥

5 हे राजन्। मातुरग्रे या कथा पूर्वमभूत्तस्यां कथायां प्रथमस्य रामस्य वाक्यं फलितम् ॥

तथाहि रामत्वमुपेयुषः प्राग्
ज्येष्ठस्य निर्वाहितसाहचर्यः ।
कृष्णः कनिष्ठः स विवेकनिष्ठ-
10 स्तथागतत्वं प्रतिपन्न एव ॥

तथाहीत्यादि प्रथमवागुपपत्तिपरम्। हलधरभावं प्राप्तस्य ज्येष्ठस्य भ्रातुर्लक्ष्मणावतारस्य सम्पादितसाहाय्यकः कनिष्ठः कृष्णो रामावतारः बुद्धत्वं प्राप्तः ॥

अपत्यरत्नद्वयसंनिधान-
15 निधानभूः कौसलराजपत्नी ।
यथा भविची विदितं तथा मे
बद्धावधानः क्षणमस्तु देवः ॥

कौसल्या द्वौ पुत्रौ यथा सूते तथा मम विदितमतो राजा क्षणं सावधानो भवतु ॥

चक्षुस्त्रयाणां जगतामवामं
वामं त्रयाणामपि कारणानाम् ।
योयं जयत्यत्रिमुनेरिवाब्धे-
रयोनिजं पुण्यमपत्यमिन्दुः ॥

5 यस्त्रयाणां जगतामवाममनुकूलं चक्षुः । तथा ब्रह्मादीनां कारणानां वामं चक्षुः । तथात्रिमुनेः समुद्रस्य चायोनिजातमपत्यं चन्द्रोऽयं जयति ॥

मयाष्टधा लोकहिताय चक्रे
कृता तनुः षोडशधा त्वयैव ।
10 इतीव यो मूर्धनि धारणीयः
परिश्रमज्ञेन महेश्वरेण ॥

मया लोकानां हितार्थं प्रकृतिरष्टधा कृता । अनेन चन्द्रेण पुन - - - - - - - - - - - - - - - - ॥*

- - - पाणौ बिभर्त्ति । हृदग्रेमृतकलशान्तर्बिभर्त्ति । 15 दृग्गोचरे वामनेत्रे बिभर्त्ति । चन्द्रं कर्पूरमिव । मृत्युंजयस्य कर्पूरोद्धूलितस्यागमेष्वभिधानात् । अन्या लोकोत्तरा प्रादेशिकी प्रदेशे एकदेशे भवा भूषास्य चन्द्रस्य भूषणत्वं भवति । किं वद्र-त्नवत् । शोभामात्रं समानो धर्मः । चन्द्रमिवेति वान्वयः ॥

लोकार्थमष्टावपि मूर्त्तयोमू-
20 रतिप्रकृष्टा तु य एष मूर्त्तिः ।

* A lacuna of about a verse or two with com

कामं च कालं च हि सर्वकालं
सतो न गृह्णात्यविरोधमीशः॥

हरस्याष्टौ मूर्तयो भूम्यादयो लोकहितार्था भवन्ति। एष यश्चन्द्रो मूर्त्तिं भवति सा लोकहितार्थमतिप्रकृष्टा भवति। अतो 5 हेतोरीशः कामं कालं च विरोधत्यागेनानुगृह्णाति। चन्द्रस्य कामोद्दीपकत्वात्। कालस्य तिथिमुखेन व्यवस्थितस्य चन्द्रेणैव सम्पादितत्वात्॥

अखण्डितेच्छैरपि राजदारैः
प्रियान्तराश्लेषसुखं न लब्धम्।
10 इतीव धन्याः प्रति दक्षकन्याः
प्राप्नोति नित्यं नवरूपतां यः॥

राजानो नृपा राजा चन्द्रश्च तत्प्रियाभिरैश्वर्येणाखण्डितेच्छाभिरपि नवनवदयितालिङ्गनसुखं न लभ्यते इत्यत इव भाग्यवतीस्तारा प्रति यो नित्यं नवत्वं गृह्णाति। कलानां 15 चयादपचयाच्चेति भावः॥

पक्षस्थिते दैत्यगुरौ विवादं
कृत्वा समं वाक्पतिनान्वयार्थे।
य एव लेभे विजयप्रशस्तिं
श्रेयान् हि राज्ञः कविपक्षपातः॥

20 चन्द्रस्य पक्षे स्थिते शुक्रे सति बृहस्पतिना साकं पुत्रार्थं

विवादं कृत्वा य एष चन्द्रो विजयकीर्त्तिं लब्धवान् । जी - -
- - - बृहस्पतिचन्द्रयोर्विवादो जातः । त्वत्रिणो ममायं बुधः
पुत्र इ - - - - - - - - - - - ॥*

- - प्रतिबिम्बिता भूर्यत्ततः कलङ्कः कलङ्क इति प्रवादो
5 जातः । कलङ्कः कलङ्क इति द्विरुक्तिर्वीप्साप्रतिपादनार्था ॥

वव्रे बलादाङ्गिरसाङ्गनापि
यदेनमेषोपि कथं कलङ्कः ।
विहाय देवी दमघोषसूनुं
न रुक्मिणी किं विधुमालिलिङ्ग ॥

10 आङ्गीरसो जीवस्तस्याङ्गना रोहिणी साप्येनं बलाद्वव्रेऽच-
कमत सोपि नास्य दोषः । शिशुपालं त्यक्त्वा रुक्मिणी विष्णुं
विष्णुं किं नालिङ्गत् ॥

तुषारगौरादपि जातमस्मात्
सुधामरामाश्रवणोचितेन ।
15 इन्दीवरेणेव सुरस्रवन्ती-
ह्रदान्महानीलरुचा बुधेन ॥

शच्याः श्रोतुमुचितेन । सुरूपत्वादिति भावः । बुधेन
महानीलकान्तिना यतो हिमशुभ्रादपि जातम् । यथा शची-
कर्णपूरलोचितेन नीलोत्पलेन गङ्गाप्रवाहात् ॥

* A lacuna of about a verse or two with com

अङ्कस्पृशमित्यादि बुधस्तुतिपरमान्तरकुलकम् ।

अङ्कस्पृशं यं परभागभङ्गी-
सौभाग्यहेतुं स्मरतेव बालम् ।
अद्यापि नीलोत्पलचारुनेत्रो
नोत्सृज्यते चन्द्रमसा कुरङ्गः ॥

बुधो नील इत्यतः परभागभङ्ग्या सौभाग्यस्य हेतुमङ्का-रूढं यं बालं स्मरतेव चन्द्रेण मृगोऽद्याप्यङ्कान्न त्यज्यते नीलो-त्पलदृष्टिः ॥

सितेन्दुमुक्तामणिजीवहीर-
भौमार्करक्तोपलगुम्फितो यः ।
आकाशलक्ष्म्या इव कण्ठसूत्रे
सहार्किणा नीलमणित्वमेति ॥

सितेन्दू एव मुक्तामणी जीव एव हीरो भौमार्काविव रक्तोपलौ पद्मरागौ तेषु गुम्फितो यो बुधः शनिना सह द्युलक्ष्म्याः कण्ठसूत्रे इन्द्रनीलभावमेति ॥

अल्पो महान्वा महसास्तु - -
- - - - - - - - - - - - - ।
- - - - - - - - - - -
- - - - - - - - - - - ॥*

A lacuna of about a verse or two with com

----निकटे स्थित इत्यर्थः । पुत्राः पितुः पार्श्वे वसन्तीति तात्पर्यम् । अयं बुधश्चन्द्रसकाशाद्व्यवहितो यदास्ते तत्तस्मादहं मन्ये इति शेषः । जीवाद्गुरोरुपजीव्याधीत्यायं बुधो भूमिजे भौमे स्वकुलजातराजोद्देशेन बुद्धिं ददाति । शनिः पितुः सूर्यस्य सकाशाद्व्युत्क्रमेण पार्श्वे वसतीति नीत्युल्लङ्घनप्रकाशनम् । बुधस्तु चन्द्रात्क्रमेणैव तिष्ठति किंतु भौमेन व्यवहितः । तथाविधा स्थितिः पुण्यार्थमेवास्य भवति । अयं हि गुरोर्नीतिमधीत्य भौमस्य प्रतिपादयति । भौमेन पुत्रेण नीतिर्भुवो वर्ण्यते सा च स्वपतीनां राज्ञां वर्णयत्यतो बुधस्य पुण्यम् ॥

रक्षःपराभूत्यभयप्रदान-<br>
प्रीतोर्वशीनिष्क्रयढौकितात्मा ।<br>
बुधप्रसूतिः पुरुहूतमित्रं<br>
पुरूरवाः पार्थिवचक्रवर्त्ती ॥

रक्षसां पराभूतिस्तयाभयप्रदानं तेन प्रीतयोर्वश्या निष्क्रयेण प्रत्युपकारेण ढौकित आत्मा यस्य स पुरूरवा बुधपुत्रो वज्रिसखश्चक्रवर्त्ती बभूव । राक्षसेभ्यो रक्षितयोर्वश्या स्वात्मा यस्य प्रतिपादितः स पुरूरवा बुधपुत्र इत्यर्थः ॥

शीतोष्णभावेन मिथो विरुद्धौ<br>
यां दीक्षितत्वेपि यदैक्षिषाताम् ।<br>
संतप्ततां तद्वरुणो बभार<br>
मित्रश्च जाड्यं प्रतिपद्यते स्म ॥

वरुणः शीतो रविरुष्ण इति विरोधिनावपि वरुणार्कौ दौचितावपि यामुर्वशीं यद्दृष्टवन्तौ तत्ततो वरुणः सन्तापमवहत् । मित्रः सूर्यो जाड्यं जडत्वमवहत् ॥

साप्युर्वशी प्राप्य तमुर्वरीशं
तथा मनोजन्मवशंवदाभूत् ।
अस्याः शची पामरकामिनीव
यथा न सं - - - - ॥

पुरूरवसं प्राप्य साप्युर्वशी तथा कामातुराभूद्यथा पामरस्त्रीव - - - - - - - - - - - - - - ॥

बहुष्वतो - - - - - - -
- - - - - - - - - - - |
- - - - - - - - - - -
- - - - - - - - - - ॥*

- - - - इन्द्रसमं पुत्रमिच्छतस्तस्य यैस्तपोभिर्हेतुभिः कुशिकस्य गाधिनामेन्द्रः स्वयमेव जातः ॥

धर्तुं धरित्रीं नवमो बभूव
नगाधिराजः स न गाधिराजः ।
ऐन्द्रीषु यस्येष्टिषु शश्वदासी-
देकाश्रयस्तर्पकतर्प्यभावः ॥

* A lacuna of about a verse or two with com

स गाधिराजो भुव वोढुं नवमः कुलपर्वतो नासीत्। काक्कासीदेवेत्यर्थः। यद्वा स गाधिराजो नासीत्किं तर्हि नवमो नगाधिराजः। इन्द्रयागेषु यस्य तर्पकत्वं तर्प्यत्वं चैकाश्रय-मासीत्। स हि शक्रस्तर्पकस्य (स एव) स एवेन्द्रयागे तर्पणीयः॥

5 को वेद तन्नाधिभुवः सतत्त्वं
दधत्पुरस्तादपि राजतत्त्वम्।
अपारतो यत्तपसः प्रभावात्
सुवर्णतां भावनयोपनीतः॥

तत्तस्माद्धेतोर्गाधिभुवो विश्वामित्रस्य माहात्म्यं को जानाति
10 यत्पूर्वं राजतत्त्वं क्षत्रियभावमपि दधत्तपसोऽपारात्प्रभावाद्धेतो-भावनया सुवर्णतां शोभनवर्णत्वं ब्राह्मणत्वं नीतः। क्षत्रियोऽपि हि विश्वामित्रस्तपोमाहात्म्याद्ब्राह्मणः संपन्नः। अथ च यः पदार्थः पारदो न भवति राजतं रूप्यं सुवर्णं करोतीत्यपि विरोधा-भासकः॥

15 निन्ये हरिश्चन्द्रमधोगतिं य-
दुच्चैःपदं चागमयत्त्रिशङ्कुम्।
कोपप्रसादौ नृपगोचरौ तत्
त्यक्त्वापि यो राज्यमपेक्षते स्म॥

विश्वामित्रो हरिश्चन्द्रं यदधः कृतवांस्त्रिशङ्कुं च यदुच्चैः-
20 पदं प्रापयत्तद्राज्यं त्यक्त्वापि कोपप्रसादावेवापेक्षते स्म नृपाणां गोचरौ। राज्ञामेव कोपप्रसादावुपयोगिनौ। अयं तु राज्यं

त्यक्तापि निग्रहानुग्रहोद्यतोभूदित्यर्थः । उदारचेतसा तेन तयोरेव राज्यफलत्वगणनादिति भावः ॥

स चक्रवर्त्ती भरतोपि जज्ञे
- - - - - - न्दुगोत्र ।
5 राज्याभयं कर्तुमनेकवारं
पुलोमजा यस्य पुरो ययाचे ॥

म ह - - - - - - - - - - - - - - -
- - - - - - - - - - - - - - - - - ॥

- - - - - - - - -
10 - - - - - ख्यानकरं जघान ।
इतीव यद्दोर्वनदृप्तदन्ती
रामेण रामो दमयांबभूव ॥

मम पूर्वपुरुषः सहस्ररश्मिस्तस्य समगणनकरं कार्तवीर्यमय हतवानित्यस्मादिव कार्तवीर्यभुजवनमत्तगजः परशुरामः श्री-
15 रामेण दमितः । मत्तश्च हस्ती दम्यते ॥

द्वाभ्यां शताभ्यां स करैररोत्सीत्
पञ्चाशता च ध्रुवमेकमेकम् ।
नैकोपि पादश्चलति स्म येन
धर्मस्य तस्मिन्परिरक्षति क्ष्माम् ॥

A lacuna of about a verse or two with com

पञ्चाशदधिकशतद्वयसंख्यैः करैः सहस्रबाहुः कार्त्तवीर्यो धर्मस्यैकमेकं पादं तद् ध्रुवं रुद्धवान् । यतस्तस्मिन्भुवं पालयति धर्मस्यैकोपि पादो नाचलत् ॥

कलिर्जजागार चुरिक्रियायां
5 कृतस्य दत्ताभय एष राजा
तेनास्य पृथ्वीवलयप्रसिद्धिं
प्रापुर्यमूहे कलिचुर्यपाख्या ॥

कार्तवीर्यस्य कलिचुरिरिति नाम प्रसिद्धं तत्र कविरन्वर्थतामूहते । चुरस्तेये इत्यस्य धातोः क्रिया चुरिक्रिया तस्यां
10 हरणेऽर्थात्कृतयुगस्य कलिरुद्यतः । कार्तवीर्यः कृतस्य दत्ताभयः । तेन ध्रुवं कलिचुरिसंज्ञा राज्ञो भूमण्डले प्रसिद्धिमवहत् ॥

तदीयमेवाभरणायमानं
क्रमागतं नाम समुद्वहन्तः ।
आसन् प्रवृत्ते कलिघर्मकाले
15 कालीवने केचन भूमिपालाः

क्रमागतं भूषणसमं तन्नाम धारयन्तः केचिद्राजानः कलिग्रीष्मे प्रवृत्ते सति कालीवनमावृण्वन् । ग्रीष्मे च वननिवासौचित्यम् ॥

तेषामगात् साहसिकाभिधानः
प्रधानभावं प्रधनाध्वगानाम् ।
यस्य प्रसन्ना दृष्टेऽसिलेखा
का - - - - - पार्थिवस्य ॥

5 प्रधने युद्धे पान्थानां तेषां मुख्यत्वं साहसिकनामा राजा--
- - - - - - - - कालीदेवीव दृष्टा ॥

सत्यं विना - - - - - - -
- - - - - - - - - - - ।
- - मनन्यगामिन्य - -
10 - - - - - - - - - ॥*

- - - माणवयाः स साहसिकस्तपस्विने वामदेवनाम्ने नि-
जराजलक्ष्मीं गुरुदक्षिणायै दत्वा सर्वां भूमिं जेतुं प्रस्थितवान् ॥

चूडामणेस्तस्य महीपतीनां
चूडामणिज्ञोपि न वेद तत्त्वम् ।
15 अहं हि दैवज्ञदशानुगामी
दैवाभिगामी स तु तत्प्रतापः ॥

चूडामणिर्नाम दैवज्ञशास्त्रं तत्र निपुणोप्यहमस्य राजशि-
रोमणेस्तत्त्वं न जानामि । यतोहं दैवज्ञस्तत्प्रतापस्तु दैवमप्यति-
वर्तते । यावानस्य प्रतापस्तावान् वाङ्मनसातिक्रान्त इत्यर्थः ॥

* A lacuna of about a verse or two with com

यत्कार्मुकारोपणमात्रयत्न-
सापेक्षमाशाविजयं विजानन् ।
सभाग्यसंपत्परिवार एव
बभ्राम सामन्तशिखामणिर्गाम् ॥

5 धनुष्कर्षणमात्रसाध्यं दिग्जयं जानन्स राजा भाग्यसंपदेव परिवारो यस्य । केवल इत्यर्थः । स चक्रवर्ती भुवं यदभ्रमत् ॥

विधास्यतः साहसमानुचर्या-
च्छायामपि च्छेत्तुमिवास्य रात्रौ ।
विरोचने चुम्बति पश्चिमायां
10 पपात जातु त्रिपुरी पुरस्तात् ॥

रात्रौ साहसं करिष्यतोऽस्य छायामप्यनुचरत्वाच्छेत्तुं वारयितुमिव सूर्ये पश्चिमदिग्गते सत्यग्रे त्रिपुरी नाम प्राप्ता ॥

अयं पृथिव्यामपि पादचारी
कष्टं द्विपात् सिंह इवैकवीरः ।
15 सहस्रपादस्मि दिवि प्रयामि
कथं रथेनेति रविर्ननाम ॥

द्वौ पादौ यस्य सोऽयं सिंह इवाप्रतिमल्लवीरो भुवि पादाभ्यां चरति । रथादि त्यक्त्वा चरतीति यावत् । अहं सहस्रपादस्मि । अतो दिवि रथेन कथं गच्छामीत्यस्मादिव रविरदर्शनं गतः ॥

क्षीणं क्षपाकान्तमशुद्धपक्षे
दृष्ट्वा विसृष्टैरिव सागरेण ।
प्रदीपितेजोवधदन्दशूकै-
रपूर्यत द्यौर्जलदैरकस्मात् ॥

5 कृष्णपक्षे द्यौ - - - - - - - - - - -
- - - - - - - - - - - - - ॥*

- - - - - - - - - - कम्पितुमारम्भमकरोत् ॥

आजन्मनः साहससादरत्वात्
स साहसस्यैव शुभं निमित्तम् ।
10 यथार्थनामा पिशुनं विदित्वा
घने घनं गर्जति नन्दति स्म ॥

नित्यं साहसकरणात्सार्थकनामा स राजा तन्निमित्त वाङ्कम्यं साहसस्यैव सूचकं ज्ञात्वा घनं कृत्वा मेघे गर्जति सति साहसिको राजातुष्यत् ॥

15 ततो घनानां निचयैर्निशातै-
र्निःशेषतस्तारकधाम्नि शान्ते ।
निशातनुत्वान्निशशाम नादं
निकाममायाविनमेष वीरः ॥

निबिडैर्मेघैस्तारकाणां धाम्नि स्थाने तेजसि वा शान्ते
20 सति निशावसानादत्यर्थं विस्तीर्णं शब्दमेष वीरः श्रुतवान् ॥

* A lacuna of about a verse or two with com

अथ ध्वनेः सन्मुखमस्य गत्वा
भयानकेनेव रसेन पूर्णाम् ।
श्मशाननामानमसौ गभीरां
पुर्यास्त्रिपुर्याः परिपामपश्यत् ॥

5 ततोऽस्य शब्दस्य सन्मुखं गत्वासौ भयानकेन रसेन पूर्णामिव त्रिपुरीनामनगरीसंबन्धिनीं श्मशानाख्यां परिपामपश्यत् ॥

प्राजाग्नीति कुलकम् ॥

प्राजाग्निहोत्रीकृतकालकाम-
पुरत्रयाख्याहुतिपञ्चकस्य ।
10 तृप्तिर्न्नकीटेन मयापि का ते
ब्रह्माण्डकोटीशतघस्मरस्य ॥

आकृष्टः पाशो यैस्तैः कालदूतैरिव खड्गहस्तैः पुरुषैः केशेषु गृहीत्वा महाकालायतनं प्रवेश्यमानमेवं क्रन्दन्तं स राजा ददर्शेति संबन्धः । ग्रस्तकालकामत्रिपुराख्यपञ्चाहुतेस्तथा ब्रह्मा-
15 ण्डकोटीशतग्रासिनस्ते नृणां मध्ये कीटेन मया का तृप्तिः ॥

सर्वाङ्गशुद्धस्य सुधारुचेर-
प्यालोकयामो हृदि कालिमानम् ।
त्रैलोक्यकर्णौ - - - -

- - - - - - - नीलत्वम्। इन्दो - - - - -
- - - - - - - - - - - - - - - - - - - -॥

- - - - - - - - - - - -
- - - - - - - - - - - - -।

5 - - - ग्रेषोपि बलैकरूपो
गोरक्षणं साहसिकः करोति॥

तव दर्शनं यद्ययत्प्राप्तं तत्तर्हि सहसा बलेन करणेन त्वयैव योग्यणीत्वं प्रापितः स प्रकाश्यताम्। योऽग्रेषो न ग्रेषोपि बलैकरूपो बलसहायो हलधर - - - मयो यः साहसिको
10 गोरक्षणं भूमिरक्षणं च करोति॥

यः कोपि वा साहसिकोस्ति लोके
यस्यास्ति वा क्षत्रियतावदाता।
कृपाकृपाणाभरणोस्ति यो वा
स पातु मां मृत्युभयादमुष्मात्॥

15 यो वा साहसिको यो वा शुद्धक्षत्रियो यो वा दयाखड्ग-भूषणो दयामय इति यावत्। सोस्मान्मृत्युभयान्मां रक्ष - - -॥

- - - - त्कालगुरूभवद्भि-
र्मेघैः स संक्रामणदीक्षयेव।

A lacuna of about a verse or two with com

सौदामनीदृष्टिभिरी - - -

- - - निर्घोषमिदं बभाषे ॥

तत्काले गुरूभवद्भिर्बहलीभवद्भिश्च मेघैः - - - - च्यमाणः ।
अत्रोत्प्रेक्ष्यते । सङ्क्रामणं वधनिषेधे प्रेरणं तद्दीचयेवेति । - - - -
5 कवान् । - - - प्रतिपादनदीक्षाया हेतोः शिष्यं दृष्ट्वा पश्यति ॥

- - - - - - प्रलापं

भाग्यैर्दृशोर्गोचरमागतं मे ।

विमुच्यतैनं द्रुतमन्यथा व-

स्तदा - - - - - - दस्मिन् ॥

10 अरे वराकाः । हे अधमाः । करुणाक्रन्दिनं स्वभाग्यैर्मम
- - - - - - गोचरमेनं यूय त्यजत तूर्णम् । अन्यथा यदि न
यूयं त्यजथ तदा - - - - - - - - - - तद्युष्माक - - -
स्यात् । युष्मानपहरामीत्यर्थः । मम - - - - - - ॥

-- - - -. सेनापरिवारितस्य

15 - - - - - - - - ।

- - - - - - - - - - - - - - ।

- - - - महाभटेन

व्यधत्त - - - - ।

* A lacuna covering the rest of this verse and its com.

- - - - - - - - -
- - कं वैद्युतदीप्तिदीपैः ॥

राजा - - - - - - - - - - - - -
गर्जितमिश्रमाराविक - - - - - - - ॥

5 - - - विश्याथ सुरालयं तं
सिं - - - - - - - ।
- - - - - - - -
- - श्रुत्क इव व्यभावि ॥

महाकालायतनं प्रविश्य स वीरस्तामहन् - - - - -
10 - - - - जन्यभ्राण्येवाद्रिगुहास्तत्समुहे रोहन्तो प्रतिश्रुत्का प्रतिशब्दो यस्य स इव जातः । गर्जितमेव प्रतिशब्द इत्यर्थः ॥

श्रुत्वैव तं मारकसैनिकानां
भ्रंशाय कौक्षेयककर्त्तरीणाम् ।
विहस्ततानायत पार्थिवेन
15 खड्गे प्रकोष्ठेष्वनिपातितेपि ॥

तं सिंहनादं श्रुत्वैव मारकाणां प्रकोष्ठेषु खड्गे अनिपातितेपि सति विहस्तता व्याकुलता खड्गादीनां - - - - स्व-विषयखड्गप्रहाराभावेपि विहस्तताभूदिति विरोधाभासः ॥

- - - - लोचयामि
त्वामस्मि कस्मादतिविह्वलोसि ।
इति ब्रुवाणं सुभ - - - -
- - - - - - - - यातुधानः ॥

5 त्वं मा संभ्रमीर्भीतो माभूरहं त्वां मोच्चया - - - -
- - - - - नं कश्चिन्मानुषमारकः कथितवान् ॥

अरे वद त्वं कतरो व - -
- - - - - - - - - - ।
यः श्रीमहाकालनरोपहार-
10 यज्ञावशिष्टाशननित्यनिष्ठान् ॥

- - - - - - - - - - - - - - ॥*

- - - - - था दुष्टं सत्त्वं सिंहादिं मृग - - - -
- - - - - - तेर्दुतिरितिरूपम् ॥

भाव्यं - - - - - -
15 - - - - - - - - - - ।
- - - मस्येव भयं प्रयुंक्ते
मन्त्रेपि - - - - - ॥

* A lacuna covering com. on this verse and the text and part of the com. of the next verse.

- - - - - - - - - - - - - तोस्याहेरिव

लक्षणं चूडार - - - - - - ॥

- - - लव्यासुरवैरिभिः स्वा-
तेजश्चयैः स्वैरिव पूर्यमाणम्।
5 सङ्गामदैरम्मदरोचिरंश-
- - - स्त्रिंशमुवाच देवः॥

सङ्गामन्यपरिणमन्निरम्मदो विद्युत्सम्बन्धी रोचिरंशो यत्र तं खड्गमुत्क्षिप्यैवं चिन्तयित्वा राजावोचत्। अतः संभाव्यते। देवैर्निजैस्तेजोराशिभिरिव पूर्यमाणम्। विद्युति विषये तेजो-
10 विषयित्वेन - - - - ॥

सुदुस्त्यजं यद्यपि नित्यकृत्यं
तथापि युष्मद्गृहमागतोस्मि।
आतिथ्यहेतो - - - -
- - - स्यः शरणागतोयम्॥

15 यद्यपि निष्ठावतां नित्यकृत्यमत्याज्यं तथापि - - - - इत्यातिथ्यहेतोर्भवद्भिरयं शरणागतो ममावश्यरक्ष्यस्त्यज्यताम्॥

इत्युक्त - - - - - - -
- - - धाक्षोभितयातुधातु।
यातुं कृतान्तान्तिकमिद्धकामं
20 निका - - - - - ॥

- - - - - रक्षः कर्त्तृ अतिरुचं कृत्वा तमित्यवोचत् ।
कस्मिन्सत्येवमु - - - - - - - - - तुरङ्गुतं शिल्पं सृष्टिः ।
तादृशस्यान्यस्य निर्माणाभावात् । तथाच् - - - - - - -
मत्समीपं गन्तुमत्यभिलाषुकम् ॥

5 आतिथ्यमभ्यर्थयते - -

- - - - - - वांश्च काल - - - - - - - - - -
- - - - - - - - - - ॥

- - - - चरस्य हस्ता-
10 द्यावत्स कौक्षेयकमा - - - ।
- - - - - - - - - - -
- - - - - - - - - मेव ॥

एवं श्रुते सति मानवमारो - - - - - त्रेकप्रहारेण
राजा तमेवेश्वरोपहारमकरोत् । - - - - - स्वविहरणे
15 इत्याङ्पूर्वस्य दाञ आत्मनेपदविधानात् । आद्धातौ - - -
- - - - - राधानार्थो न तु धारणार्थः । अत आ इत्यव्ययं
कृपार्थं भिन्नपदम् । कृपा - - - - - - र्थत्वात् ॥

पलायितैरित्याद्यालोडितेत्यन्तं कुलकम् ॥

* A lacuna covering the rest of this verse and its com

पलायितैः पार्श्वचरैर - - -
- - - - - कालरिपोरगारे ।
स्वजातिभक्ष्ये विलुठत्यवन्यां
छिन्नानने मत्स्य इवोपहारे ॥

5 भय - - - - - सादे सति । तथा स्वजातिर्मनुष्या
भक्ष्यं यस्य तस्मिन्नच - - - - - - - ॥

- - - - - - - न
जीवातुवातैरिव क - - ।

10 - - - - - - - - - ॥

अकाण्डे निर्गता ये - - - - - - - ॥*

- - - - - दि राज्येषु निःस्पृ - - हेतुः इमां
भूमिं राक्षसरहितां - - - क्षते सति अ - - -
प्रजारक्षार्थं वामदेवमहं प्रजारक्षार्थेऽचोदयम् - - - ॥

15 - - - - - लेन च प्राक्
त्रैलोक्यसारेण महीधरेण ।
त्रिलोचनोपि त्रिपुरीं जिघाय
त्व - - - - - पुरी जितेयम् ॥

---

* A lacuna covering the rest of this com and the text of the next verse.

गरादिरूपभाजा त्रिजगत्प्रधानेन मन्दरपर्वतेन हेतुनेभ्व-
- - - णि जितवान् । त्वया पुनर्यत्नं विनैवं त्रिपुरी जिता ॥

एतामधिष्ठाय करिष्य - -
- - गरां हस्तगतां धरित्रीम् ।
5 अहं कृपाणे कृतसंनिधाना
कीर्त्तिश्रियोर्मध्यगता - - ॥

एतां त्रिपुरीनगरीमधिष्ठायाधिष्ठानं कृत्वा सर्वां भुवं जेष्यतस्ते खड्गे संनि - - लक्ष्म्योर्मध्यगता भविष्यामि ॥

तेज - - - - - - - -
10 - - - - याल - - -
- - - पूर देवीत्यव - - -
- - - - - - - - - - - ।

* The rest of this canto, extending to about 15 more verses and com. thereon, is missing

## सप्तमः सर्गः ॥

*– – – – – – – – – – – – – – – – – – – –

– – – – – – – – – – – – – – – – – – – – –

णश्चेत्यपि शब्दार्थः। कुम्भोदरनामा भवान्या गणस्तं हिमाद्रि-
लता(भवान्या)नां भगिनीनामिव या – – – रूको भवसि ॥

5 अवलम्ब्य मृगाधिराजभावं
व्रततीनामवता वनेभभङ्गम्।
भय – – – – कदाचि-
द्विकृतं वासववारणो रराज ॥

सिंहरूपमभिनीय हिमाद्रिलता – – – – चताद्भ्या-
10 भयं प्रापित ऐरावणो विकृत कलाक्रन्दितवान् ॥

सदसि ध्वनितेन तेन – – –
– – – व्यकथाप्रसङ्गभङ्गे।
अशपद् द्विरदास्यशब्दशङ्का-
कुपिता पर्वतराजनन्दनी त्वाम् ॥

15 – – न हरस्य कथाच्छेदे जाते गणपतिबृंहितमिति
शङ्कया कुपिता गौरी त्वां सभायाम – – – – ॥

* The first ten verses or so with com. seem to be missing.

स्वरसेन यथा तथा वनेस्मि-
न्नसि राजेव समुद्यतो विहर्तुम् ।
परमेश्वरपाददूरवर्ती
व्रज राजेव महीतले भवेति ॥

5 यथा तथानुचितं स्वातन्त्र्येण राजेव क्रीडितुमस्मिन्वने यत्त्वं प्रवृत्तोतो महेश्वरपादाद्दूरवर्ती भूतले राजेव भव ॥

शनकैस्सुहृदा निकुम्भनाम्ना
तवशापावधिमर्थिता भवानी ।
प्रचलत्प्रतिबिम्बिताभ्रमुक्ता
10 द्युनदीव प्रससाद चावदच्च ॥

ततो निकुम्भसंज्ञेन त्वदीयेन सख्या सविनयं शापावधिमर्थिता सती गौरी लोलैरभ्रैर्मुक्ता गङ्गेव प्रससाद च शापावधिं चावदत् ॥

उपयास्यति भूमिपालभावं
15 कलिकाले दशकन्धरातितायी ।
इति निश्चलनिश्चयो यदासौ
भविता संभविता तदास्यमुक्तिः ॥

कलावपि श्रीरामो राजत्वं प्राप्स्यतीति सनिश्चयः कुम्भोदरो यदा भविष्यति तदा शापमुक्तिरस्य भविष्यति ॥

गिरिजागिरमीदृशीं निशम्य
व्यमृशस्त्वं न ममास्ति शापशान्तिः ।
न हि कश्चिदयं स्फुरत्युपाधिः
पृथिवीं येन कलावुपैति रामः ॥

5 एवं गौरीवचः श्रुत्वा त्वमेवं विचारमका - - - - ॥*

- - - - - - - - - - - - - - - -

- - - - - - - - यद्भाषितं तन्नूनं तयैव वामनया

लिप्तं त्वां मत्वा शत्रुहस्तिनो द्रष्टुं न शक्ताः ॥

गणकस्य गिरेति निर्विकल्पो
10 नृपतिर्भूभरधारणानुतापम् ।
उदकण्ठत नीलकण्ठलीला-
वृषलाङ्गूलनभस्वतापनेतुम् ॥

दैवज्ञोक्त्या त्यक्तविकल्पो राजा हरक्रीडावाहपुच्छवातेन

भूभारोद्वहनतापं निवारयितुमभ्यलषत् ॥

15 अजयत्पृथिवीभृतस्समस्ता-
न्स षडङ्गेन बलेन सर्वकालम् ।
झटिति स्फटिकाचलं प्रतस्थे
बलमष्टाङ्गमवाप्य योगनिष्ठम् ॥

---

* A lacuna covering the rest of the com. on this verse and the text and part of the com. of the next.

स षडङ्गेन बलेन सदा राज्ञोजयत् अष्टाङ्ग(यो)गं प्राप्य स्फटिकाद्रिं प्रस्थितवान्। राज्यादप्यधिकस्पृहो योगेभूदित्यर्थः। षड्भ्योष्टानामधिकत्वादिति भावः। पृथिवीभृच्छब्दस्य श्लिष्टत्वादुक्तिसङ्गतिः॥

5 अथ गूर्जरराजमूर्जितानां
मुकुटालङ्करणं कुमारपालः।
अधिगम्य सुतासुतं तदीयं
परिरक्षन्नभवद्यथार्थनामा॥

तेजस्विनां चूडारत्नं गूर्जरेन्द्रं तदीयं दौहित्रं प्राप्य
10 रक्षन्कुमारपालस्सत्यार्थनामाभूत्। कुमारोऽप्राप्तराज्यो राज पुत्रस्सोमेश्वरस्तस्य पालनान्नाम सार्थकम्। कुमारपालस्तदीयो भ्रातृपुत्रः॥

प्रथमस्सुधवासुतस्तदानीं
परिचर्यां जनकस्य तामकार्षीत्।
15 प्रतिपाद्यजलाञ्जलिं घृणायै
विदधे यां भृगुनन्दनो जनन्याः॥

घृणायां प्रतिपाद्यो जलाञ्जलिर्यस्यां तां निर्घृणां परिचर्यां शिरच्छेदात्मिकां - - - रमुरामो मातुः कृतवांस्तां परिचर्यां पूजां ज्येष्ठस्सुधवापुत्रः पितुः कृतवान्। पितुश्शिर-
20 च्छेदमकार्षीदित्यर्थः॥

न परं विदधे वृथागुणित्वं
जनकं स्नेहमयं विनाश्य यावत् ।
स्वयमेव विनश्य गर्हणीयं
व्यतनोद्दीप इवानुरागगन्धम् ॥

5 स्नेहमयं जनकं केवलं न विनाश्य रक्त - - - - - या
- - - - - - - - रणेव विनाशं मरणं प्राप्य - - -
नुरागगतं यथा - - - - - - - - - ॥*

- - - - यन्तृसादिपत्ति-
व्यवहारेषु विसारिणा चतुर्धा ।
10 युधि वीररसेन शुद्धिमन्तं
न समीपादमुचत्कुमारपालः ॥

रथादिषु चतुर्भिः प्रकारैर्विसरता वीररसेन शुद्धिमन्तं
तं कुमारपालः स्वसमीपान्नात्यजत् ॥

हनुमानिव शैलतः स शैलं
15 द्विरदेन्द्राद् द्विरदेन्द्रमुत्पतिष्णुः ।
छुरिकामपहृत्य कुञ्जरेन्द्रं
गमयामास कबन्धतां तथैव ॥

शैलाच्छैलं हनुमान् यथोत्पतिष्णुस्तथा हस्तीन्द्राद्ध-

* A lacuna of a verse or so with com

स्तौन्द्रमारोहन् स कुञ्जरेन्द्रादेव च्छुरिकां हृत्वा तयैव च्छुरिकया कुञ्जरेन्द्रं कबन्धतां प्रापयत् ॥

इति साहससाहचर्यचर्यः
समयज्ञैः प्रथमोदितप्रभावाम् ।
5 तनयां स सपादलक्षपुण्यै-
रुपयेमे त्रिपुरीपुरं(द)रस्य ॥

साहसानां साहचर्यं चर्या यस्य स दैवज्ञैः कथितप्रभावां तेजलस्य सुतां कर्पूरदेवीं सपादलक्षपुण्यैरूढवान् ॥

इतरेतरचित्तचौर्यचर्या-
10 चतुरत्वेपि निकामनिर्विकारम् ।
परमेश्वरयोस्तयोर्युगं त-
त्सुतरामेकशरीरतामयासीत् ॥

तयोः परमेश्वरयोर्महाराजयोश्शिवयोश्च युगं कर्तृ एकशरीरतामैक्यमभेदं चागच्छत् । अन्योन्यचित्तस्य चौर्यचर्या
15 हरणं तत्र जागरूकत्वेपि सति निर्विकारम् ॥

अविभावितभावभेदलेशौ
निजनामादिपदाभिधेयकल्पैः ।
शिशिरीभवदाययौ यशोभिः
परितापं न कदाचिदूहतुस्तौ ॥

न विभावितोऽनुमितो भावस्यान्योन्यरागस्य भेदलेशो ययोस्तौ तथा सोमेश्वरकर्पूरदेवीति निजनाम्नोरादिपदे सोम-कर्पूरशब्दौ तदर्थकल्पैर्यशोभिर्हिमीभवच्चेतसौ तौ तापं न जनयामासतुः ॥

5 अथ जातु हृदीव संनिधानं
दहशे स्वप्नविधौ विधातुकामः ।
चि - - - - - - -
- - - - - - पद्मनाभः ॥

हृदये स्थितिं कर्त्तुकाम इव स्वप्ने - - - - - - -
10 - - - - ॥

उदयावसरे हरेरभेद
- - - - - - - - - - ।
- - - - - - - - - - -
- - - - - - - - - - ॥

15 - - - - - - - - - - - - - - ॥*

- - - - - - - -
- - - - - - - - ।
- - - - - - - -
- - य प्रतिपादयचिकार ॥

* A lacuna covering com. on this verse and part of the next verse

साश्चर्यचित्तो राजा तत्स्वप्नद्वयं सृष्टिकर्त्तुस्सकलकर्मसाक्षिणो ज्योतिर्विदेवर्णयत् ॥

स जगाद यदैक्षत क्षपाग्रे
क्षितिपस्तद्भविता चिरादमोघम्।
यदुषस्यवलोकितं तु देव्या
कलितस्तस्य न कालतोतिपातः॥

राजा प्रदोषे यदपश्यत्तच्चिरेण सफलं भविष्यति। यत्तु देव्या प्रातर्दृष्टं तस्य चिरकालत्वं नाकलितम् ॥

उचितामिव वाडवाग्निमैत्रीं
मकराङ्कस्थितितः करोति भौमः।
गगने न ममास्ति कापि शोभे-
त्यधुना कुम्भमिवालसः प्रविष्टः॥

मकरो राशिविशेषस्तस्याङ्को मध्यम् मकराङ्कस्य समुद्र तत्र स्थित्योपपन्नां वाडवाग्निमैत्रीमिव भौमः करोति। दीप्तो वर्त्तत इत्यर्थः। भौमस्य हि मकरराशिरुच्चस्थानम्। आकाशे मम न कापि शोभेत्यत इवालसश्शनैश्चरः कुम्भं राशिविशेषं घटं च प्रविष्टः। अलसगामित्वादाकाशे शोभाभावः॥

दनुजारिमिवानुनेतुकामो
दनुजानां गुरुरेति मीनराशिम्।

अधिरोहति मेषमेष पूषा
तुरगाणामिव खेदशान्तिकामः ॥

दनुजारिं विष्णुं प्रसादयितुकाम इव शुक्रो मीनं राशिं समुद्रं चैति । तथाश्वानां विश्रमार्थमिवार्को मेषं राशिं ऊड-
5 मध्यधिरोहति ॥

विहसन्निव मेषराशिवन्तं
वृषभं याति वृषाङ्कशेखरोपि ।
उपलिप्सुरिवोभयस्वभावं
मिथुनं संनिदधाति सोमसूनुः ॥

10 मेषो ऊडस्तद्वामिनं रविं हसन्निवेन्दुर्वृषं राशिमनड्वाह-मपि आयाति । वृषांकशेखरत्वात्तस्य वृषस्थितिरु - - - - स्थिररूपं प्राप्तुकाम इव बुधो मिथुने संनिहितः। द्विस्वभा - - - - - - - - - - यो रवीन्द्वोर्वा स्वभावमुपलब्धुकामोपि ॥

तिमिरा - - - - - -
15 - - - - - - मभ्युपैति ।
पृथिवीमभवं शिखीति बुद्ध्वा
यजमान - - - - - -

* A lacuna covering com. on the verse and text and part of the com. of the next verse.

- - - - - - - - - - - - - - -

कुम्भाख्यराशिद्वये निषसम । अन्योपि स्वकार्यमन्येन सम्पादितं सम्भाव्य स्वगृहे निष - - ति । तुङ्ग इति पाठो नार्थः । तयो राश्योस्तयोस्तुङ्गत्वासंभवात् प्रकृतार्थाननुगुणत्वाच्च ॥

5 अ(थ पञ्च)भिरेषदीप्तिमद्भि-
स्तपनाद्यैः कलिकालिकां विहाय ।
ध्रुवमेकपदे कृती बुभूषु-
र्नृपपञ्चाग्नि - - - नेहा ॥

ध्रुवमयमनेहकालः पञ्चाग्नितपश्चरति । अत्र हेतुमाह ।
10 कृती बुभूषुः कृतयु - - - मिच्छुः कलिमालिन्यं त्यक्त्वा- - - भिर्दीप्तिमद्भिरुच्चैस्सूर्याद्यैर्यश्च कृती कृतकृत्यो भवितु - - - ति स मल्लं त्यक्त्वा पञ्चाग्नितपश्चरति ॥

इति शुद्धिमति क्षणेच गर्भे
स्वयमाधत्त हरिः स्वमेव देव्याः ।
15 अचिराद्भविता पुरस्तदेषा
क्षितिरुन्मूलितरामराज्यगर्वा ॥

एवं शुद्धेस्मिन्क्षणे देव्या गर्भे विष्णुस्स्वयं स्वमात्मानमधत्ताहितवान् । तत्ततो हेतोरेषा भूमिरचिरेण त्यक्तरामभद्रराज्यदर्पा पुरो भविष्यति रामराज्यादप्यधिकस्य विभवस्य
20 प्राप्तः ॥

इति वादिनमा दिनावसानं
वसनालङ्करणादिदानवर्षैः ।
परितः परितोष्य पार्थिवस्तं
गणकाग्रेसरमुत्सवं चकार ॥

5 एवं वादिनं तं गणकं वस्त्रादिभिस्संमान्य राजा प्रदोषं यावदुत्सवमकरोत् ॥

गणितासु गतासु यामिनीषु
प्रजगल्भे मुखपाण्डिमा स देव्याः ।
उदरं विशतो हरेरपश्यत्
10 स्वपतो नाभिजुषो यमम्बुजस्य ॥

स्वपतो शयालुः स्वोदरं प्रविशतो विष्णोर्नाभिस्थस्य पद्मस्य यं पाण्डिमानमपश्यत् स मुखपाण्डिमाल्पासु रात्रिषु गतासु सतीषु संक्रान्त इवेत्यर्थः ॥

शनकैश्शनकैश्शशाङ्कमुख्याः
15 कृशभावोवयवेषु सार्वभौमः ।
उदरस्य महार्घता भविष्यत्य-
तिरिक्तेत्युदपादि चिन्तयेव ॥

उदरस्याधिका महर्घता भविष्यतीति चिन्तयेव कर्पूरदेव्या अङ्गेषु शनैश्शनैः कृशत्वमखण्डितमुत्पन्नम् ॥

अपरेपि महस्विनः पृथिव्यां
व्यवहर्त्तुं न यथारुचि क्षमन्ते।
इति गर्भगुणानिवाभ्यधत्ते
क्रमशोस्याः प्रतिपद्य मान्द्यमग्निः॥

5 अन्येपि तेजस्विनो यथारुचि यथाभिप्रायं यथादीप्ति च भुवि व्यवहर्त्तुं न समर्था इत्येतान् गर्भगुणानिव जठराग्निर्मन्दतां प्राप्याभ्यधात्॥

अचिराद्भुवनन्दनस्य भोज्या
निखिला भूरिति शृण्वती जनेभ्यः।
10 यदसेवत मन्दयापि रुच्या
-- मास्वादमिवैक्षत क्षितेस्तत्॥

रुचिर - - - - - - याऽपि मन्दाग्निरपौत्यर्थः।
- - - - - - - भि - - - याद्भुजे तन्नूनं
मात - - - - - - - - - - - - - - -
15 - - - - - - - - - - - तौ भूमेरास्वादं
मा - - - -॥

- - - - - - - - - - - - - -
- - - - - - - - - - - - - -।

उदरेण चिरेण जातमस्या-
20 स्त्रिवलीविप्रतिपत्तिपण्डितेन॥

य एकमेव बलं बलाख्यमसुरमभिनत्तस्येन्द्रस्यायुधं वज्रस्तस्य साम्यं त्यक्तवता वज्रादपि कृशेनेत्यर्थः। उदरेण जातमिति भावे क्तः। तिस्रश्च ताः वल्यस्त्रिवल्यः त्रयाणां बलानां समाहारस्त्रिबली त्रिवलीनां त्रिबल्याश्च विप्रविपत्तौ पराभवे 5 - - - डितेन एकबलभेदी यस्तस्य त्रिवलीभेदिना सह महदन्तरम्॥

हरिमध्यरुचिं जयत्यधस्तात्

सति मध्ये करिकुम्भकल्पयोर्या।

अभवद्रुचिरद्य सास्ति नेति

10 स्तनयोश्श्यामसुखत्वमाविरासीत्॥

हरिस्सिंहस्तस्य मध्यमुदरं तस्य शोभां कृशलाज्जयत्युदरेऽधस्तात्सति हस्तिकवाटसदृशयोरावयोर्या शोभा पूर्वमासीत्सा च नास्ति। गर्भेण मध्यस्य स्थौल्यादिति भावः। इतीव स्तनयोश्श्याममुखत्वं चूचुककार्ष्ण्यं कालमुखत्वं चासीत्। सिंहजये करि-15 कुम्भरुचिरुचिता॥

मुखमग्निमुशन्ति यस्य सन्तो

भविता तेन पुनस्तनंधयेन।

नृपवामदृशस्तु पूर्वमेव

स्तनयोश्श्यामिकया मुखं चुचुम्बे॥

20 सन्तोऽग्निं यस्य मुखमुपदिशन्ति तेन विष्णुना पुनः पश्चात्स्तनपायिना भविष्यते। श्यामिकया तु देव्याः स्तनयोर्मुखं

प्रागेव चुम्बितम् । अग्निः कृष्णवर्त्मा स यत्र प्राप्नोति तत्र पश्चाच्छ्यामिका भवति अत्र तु विपर्ययः ॥

विनिवेशयति स्म यत्र चास्मात्
कथमप्युत्क्षिपति स्म पादयुग्मम् ।
5 सुचिरस्य भुवेव भाविवध्वा
प्रतिविन्यासमति प्रणम्यमानम् ॥

सा यत्र च स्थाने पादद्वयमक्षिपदस्मात्स्थानात्सा पादद्वयं कष्टेनोदक्षिपत् । भाविन्या स्नुषया भुवा न्यासे न्यासे प्रणम्यमानं कृतप्रणाममिव ॥

10 रविणा शशिनं भृतं कलाभि-
स्सकलैरेव करैरिवार्पिताभिः ।
दधतीं कमलां सहस्रपत्रं
स्वमुखस्योपरि सा ददर्श सुप्ता ॥

सकलैस्सहस्रसंख्यैः करैरर्पिताभिस्सहस्रसंख्याभिः कला-
15 भिर्भृ - तं पूरितं चन्द्रमिव सहस्रपत्रं पद्मं स्वमुखस्योपरि धारयन्तीं लक्ष्मीं - - - स्वप्नेपश्यत् ॥

ज्वलदाननलम्बिदन्दशूकं
विहगं जातु ददर्श हेमपक्षम् ।
विगलद्यमुनार्कबिम्बदग्धं
20 पुरतो मेरुसधीरतामिवाप्तम् ॥

ज्वलति दीप्ते आनने लम्बौ दन्दशूकः सर्पो यस्य तं तथा हेममयपक्षं विहगं गरुडमधोरतामाप्तं पुरोपश्यत्। अत्रोत्प्रेक्ष्यते। विगलन्तौ यमुना य - - बिम्बेन दिग्धं सहितं सुमेरुमिव। गरुडस्थानीयो मेरुः अर्कस्थानीयं मुखम्। - - स्थानीया यमुना ॥

वलयीकृत - - - - - - - -
स्थितमात्मानमलक्षयत्कदाचित्।
- - - - - - - - - - - - -
- - - - - - - - - - - -म् ॥

सा देवी आत्मानं वलयीकृतो भोगः कायो येन तथाविधे शेषे एव तल्पे स्थितमपश्यत्। अतः सभाव्यते गुरुर्यो गर्भभरस्तेन ऊष्मा तापस्तस्य शमार्थं तूर्णं चन्द्रमण्डलमिव प्रविष्टम् ॥

स्वमवैक्षत चन्द्रकान्तशाला-
वलभीशृङ्गनिषङ्गिणं कदाचित्।
उपदर्शनवाञ्छयोपनीतं
धवलद्वीपमिवोदरस्थितेन ॥

सा जातु स्वात्मानं चन्द्रकान्तमये शालावलभीशृङ्गे निषण्णमारूढमपश्यत्। अतस्सभाव्यते उदरस्थितेन हरिणा दर्शनार्थं श्वेतद्वीपमिव आनीतम् ॥

अथ पुष्पशरस्य बन्धुमन्यं
पृथिवीमाधवमभ्युपेष्यतीति ।
उपयोगमपश्यतीव किञ्चित्
स्वगतं गच्छति माधवस्समाप्तिम् ॥

5 जनकत्वादुद्दीपकत्वाद्वान्यं लोकोत्तरं कामस्य बान्धवं विष्णुं भूः प्राप्स्यतीत्यतः स्वात्मानमनुपयुज्यमानं पश्यतीव माधवे वैशाखे समाप्तिं गते ॥

तमसः प्रशमाय सत्त्वमूर्त्ते-
रवतारावसरं विविञ्चतीषु (?) ।
10 कलिबन्धुतयेव बिभ्रतीषु
कृशिमानं क्रमशस्तमस्विनीषु ॥

कलिबन्धुभावेन हेतुना तमसः पापस्यान्धकारस्य च शमनार्थं सत्त्वमूर्तेर्विष्णोरवतारसमय विमृशन्तीष्विव तमस्विनीषु रात्रिषु कृशिमाम तुच्छत्वं क्रमेण रात्रिषु धारयन्तीषु । तम-
15 स्विनीष्विति साकूतम् ॥

अचिराद्दिवसेश्वरस्य वंशः
परमां वृद्धिमवश्यमेष्यतीति ।
दिवसेषु विकस्वरीभवत्सु
स्मयमानेषु च पुष्पाकरेषु ॥

*

सूर्यवंशो चिराद्वृद्धिं प्राप्स्यतीत्यत इव दिनेषु वर्धमानेषु सत्सु पद्मसरस्सु च विकासिषु सत्सु ॥

नरकद्विषि भूभरोज्जिहीर्षा-
जुषि सोमेश्वरवल्लभोदरस्थे ।
5 अलसालसगामिनीव शून्यं
जलधिं द्रष्टुमिवाक्षमे दिनेशे ॥

दिनेशेऽर्केऽलसालसं गच्छति सति । अतस्संभाव्यते । भूमिभारोद्धरणेच्छाधारिणि हरौ देवीगर्भस्थिते शून्यं सम्पन्नं जलधिं द्रष्टुमसमर्थेषु च ॥

10 सलिलेपि शयालुना विमुक्ता
नृपदारोदरगोचरेण निद्रा ।
दिवसेष्वनुमन्तुमाविशन्त्या-
मिति तस्याममुमेव जीवलोकम् ॥

समुद्रे उचितनिद्रेणापि नृपदाराणामुदरे गोचरो यस्य 15 तेन समुद्रे निद्रा त्यक्तेति तस्यां निद्रायामर्थाद्विष्णुमेवानु-मन्तुममुं जीवलोकं दिनेष्वाविशन्त्याम् ॥

निवसत्यपरत्र पुष्करा - -
- - - पिबत्पयोधिमेषः ।
इति हैमवतीभिरद्भिरर्कं
20 तमिवापूरयितुं विशत्युदीचीम् ॥

अन्यच्च विष्णौ वसति सति वडवाग्निरशेषं समुद्रं मा स्म पिबदित्यत इव हिमाद्रि - - - - पूरयितुमुत्तरदिशं रवौ प्रविशति सति॥

मणिदीपपतत्पतङ्गमाला
5 द - - - - वितानुभावैः।
प्रविवेश पुरः कृतप्रवेशं
शकुनै - - - परि - -॥

- - तल्लीना पतङ्गमाला - - - - विभावितो दृष्टोनुभावैः स्वभावो येषां तैश्शकुनैराश्रित मनोहरं सूतिकावासं
10 देवी प्रविष्टा॥

ज्येष्ठत्वं चरितार्थतामथ नयद्रामान्तरापेक्षया
ज्येष्ठस्य प्रथयन्परंतपतया ग्रीष्मस्य भीष्मां स्थितीम्।
द्वादश्यास्तिथिमुख्यतामुपदिशन्भानोः प्रतापोन्नतिं
तन्वन्गोचरगोर्निजेन नृपतेर्जज्ञे सुतो जन्मना॥

15 ज्येष्ठे मासि निजेन जन्मनोत्पत्त्यान्यमासेभ्यो ज्येष्ठमासस्य ज्येष्ठत्वं कृतकृत्यतां यथार्थतां नयंस्तथा परंतपतया वैरितापेन च ग्रीष्मस्य भीष्मां स्थितिं कुर्वन्द्वादश्यां जन्मना तस्यास्तिथिषु प्राधान्यं दिशन् गोचादेर्भानोः प्रतापौन्नत्यं कुर्वन् सुतो राज्ञोतो - - - - - -ज्येष्ठत्वं व्याख्यानं न संगच्छते। ज्येष्ठ इति
20 व्युत्पत्तिसिद्धेः॥

**निश्शेषाणां शिवानामुपरिकृतपदः साहचर्याधिकारी**
**सर्वस्यास्तीर्थजातेस्सकलसुरतरुग्रामणीसोदरश्च ।**
**बालः कोप्येष राजा भुवमुपगतवानित्यकस्मात्सरस्व-**
**त्यस्मिन्नुत्पन्नमात्रे सुखमलमकृत व्योममूर्तेर्मृडस्य ॥**

5 सर्वेषां शिवानां श्रेयसां सुप्रजां चोपरि कृतं पदं च रजः - - - - येन तथासर्वतीर्थानां साहचर्याधिकारी तुल्यः पवित्रत्वात् । सर्वेषां कल्पवृक्षप्रधानानां सोदरश्चैष बालः । कोप्यद्भुतोपूर्वो राजा चन्द्रश्चेति भुवमवतीर्ण इति सरस्वती व्योमरूपस्य भगवतो सुखमभूषयत् आकाशादाशुचरितेत्यर्थः । चन्द्रो 10 ह्येकस्यैव शिवस्य शिरसि स्थितः अयं तु सर्वेषां शिवानाम् । चन्द्रो गङ्गाया एव सहचरः अय तु सर्वस्यास्तीर्थजातेः । स पारिजातस्यैव सोदरः अयं तु सर्वेषां कल्पवृक्षाणामिति भद्रम्*॥

श्रीश्रीकण्ठचरित्रकाव्यविवृतौ विश्वस्य निश्वस्य च
च्छायाभाजि किरातकाव्यविवृतौ विश्रम्य - - श्रियि ।
15 पृथ्वीराजजयाख्यकाव्यविवृतौ संवेशमिच्छाम्यहं
शास्त्रक्षोदजखेदमेदुरमतिर्ज्योत्स्नाकरीं लावणिः ॥

श्रीलोलराजसुतपण्डितभट्टनोन-
राजात्मजो विवरणेन स जोनराजः ।
सर्गं सुखं व्यधित सप्तममत्र पृथ्वी-
20 राजाख्यराजविजयाभिधकाव्यराजे ॥

## पृथ्वीराजविजयविवरणे सप्तमस्सर्गः ॥

* A marginal note reads—चन्द्रस्त्वाकाश एव तिष्ठति अय तु भुवि ।

## ॥ अष्टमः सर्गः ॥

अथ शब्दगुणं व्योम सत्यमित्यवदन्निव ।
सङ्गीतकप्रसङ्गेन पुरन्दरपुराङ्गनाः ॥ १ ॥

अथाप्सरसो गीतातिशयेनाकाशं शब्दगुणं सत्यमित्यकथयन्निव ॥ १ ॥

5 दिव्यदुन्दुभिजीमूत - - - - भाविनी ।
पुष्पवृष्टि - रोचिष्ठ किञ्जल्कतडिदुज्ज्वला ॥ २ ॥

दिव्यदुन्दुभिरेव जी - - - - - - - - नी तथा
किञ्जल्क एव तडित्तयोज्ज्वला पुष्पवृष्टिरशोभत ॥ २ ॥

पुष्पवर्ष - - - - - - - - - - - ।
10 - - ष्टानीव यान्ति स्म दिङ्मुखानि प्रसन्नताम् ॥ ३ ॥

- - - - - - - पुष्पवर्षे मिलन्तो ये दिव्यभृङ्गास्तेषां पक्षवातेन प्रमृष्टानीव दिङ्मुखानि प्रसादं प्रापुः ॥ इतीत्यन्तं (p 253) कुलकम् ॥

सनाथां पृथिवीं मत्वा राजपुत्रस्य जन्मना ।
15 रजोपि पस्पृशुस्तस्यास्त्रासादिव न मारुताः ॥ ४ ॥

राजपुत्रेण जातेन सस्वामिकां पृथ्वीं सम्भाव्य भयादिव वायवो रजोपि भूमेर्न पस्पृशुः ॥ ४ ॥

अकाण्डे न प्रवेष्टव्यं प्रजास्विति हविर्भुजा ।
मृत्युर्न्यंयम्यतेवार्चिःकराग्रैर्दक्षिणामुखैः ॥ ५ ॥

भवता प्राणिषु प्रवेशोऽसमये न कार्य इत्यग्निना दक्षिणा-
ग्रैर्ज्वालाहस्तैर्यमो निषिद्ध इव । यमस्य दक्षिणदिशापतित्वा-
5 ज्ज्वालानां दक्षिणाग्राणां निषेधकत्वमुचितम् ॥ ५ ॥

स्ववंश्यमेलकोत्कर्षं पश्यन्तौ शशिभास्करौ ।
यशःप्रतापवैशद्यदीप्तिपात्रीबभूवतुः ॥ ६ ॥

निजकुलजातयोस्संगमेनोत्कर्षं पुत्रजन्मलक्षणं पश्यन्तौ
यशःप्रतापाभ्यामिव वैशद्यकीर्त्योः पात्रीबभूवतुः ॥ ६ ॥

10 गुणवद्भिर्वृता लक्ष्मीः पद्मैरस्मत्प्रसूतिभिः ।
इति वैमल्यमाजग्मुरव्याजं सलिलाशयाः ॥ ७ ॥

अस्मज्जातैर्गुणिभिः पद्मैश्च श्रीर्वृतेतीव सरांसि वैमल्यं गुणं
प्रापुः ॥ ७ ॥

विभाव्य स्वामिनः पत्नीं समुत्पन्नजगन्निधिम् ।
15 भूरप्यस्तुयर्येवाभूद्गूढिद्दुरशेवधिः ॥ ८ ॥

समुत्पन्नो जगन्निधिर्विष्णुर्यस्यास्तां महिषीं विमृश्य स्पर्धयेव
भूरपि प्रकटीकृतहेमकुम्भाभूत् । हेमकुम्भप्रादुर्भावोक्तिर्बाल-
रक्षणौचित्यादत्यर्थं संगच्छते ॥ ८ ॥

धर्मकर्मक्रियाविघ्नहरे जाते नृपात्मजे।
प्रसेदे यजमानानां न केषामन्तरात्मना॥ ९॥

यज्ञादिविघ्नहरे पुत्रे जाते सति सर्वेषां याज्ञिकानां चित्तेन प्रसादः प्राप्तः। तज्जन्मना चेतः प्रसन्नमभूदात्मनः
5 प्रसन्नत्वादिति भावः॥ ९॥

इति विष्णुमयं मूर्तिभेदं मानुषतां गतम्।
मत्वेव देवदेवस्याप्यनन्दन्नाष्टमूर्तयः॥ १०॥

हरिमवतीर्णं मत्वाष्टमूर्तेरष्टौ मूर्तयस्तुष्यन्निव। इत्थं क्षित्यादीनां रजोभावादानन्दोत्प्रेक्षणम्॥ १०॥

10 नृत्यन्तीनां सुरस्त्रीणां त्रुट्यद्भिर्हारदामभिः।
जेतुं मरुत्तमां प्राज्यां मुक्तावर्ष इवाभवत्॥ ११॥

नृत्यवशाच्छिन्नैर्हारैर्हेतुभिर्मुक्तावर्षं मरुत्तं राजानं जेतुं जितं कर्तु मिवाभूत्। अन्तर्भावितण्यर्थोऽत्र जयतिः॥ प्रक्रान्तमित्याद्यष्टभिः [(?) मित्यन्तं दशभिः p 256] कुलकम्॥ ११॥

15 आहृतैर्व्योमगङ्गातो वातेन कनकाम्बुजैः।
नृत्तप्रवृत्तनागारिभ्रष्टपक्षाङ्किता इव॥ १२॥

आकाशगङ्गातो वातेनानीतैस्सुवर्णपद्मैर्हेतुभिर्नृत्यद्गरुडपतत्पक्षभूषिता इव॥ १२॥

स्वनितेन मृदङ्गानामप्सरोनाव्ययोनिना ।
लक्ष्मी महो - - - - - - गर्जदैरावता इव ॥ १३ ॥

अप्सरसां नृत्ते जातेन मृदङ्गशब्देन हेतुना श्रीमहोत्सवे उत्साहेन गर्जन्नैरावणो यासु पत्युरवताराग्महोत्सवः। स्त्रियो हि
5 भोगलम्पटत्वाद्भर्तारमनेकरूपमिच्छन्ति । ऐरावणस्य गर्जनं लक्ष्म्या गजवाहनत्वात् ॥ १३ ॥

नृत्यद्देववधूवक्त्रगलद्धर्माम्बुशीकराः ।
पृथिवीं सुधया सेक्तुं प्रवृत्तेन्दुशता इव ॥ १४ ॥

नृत्यन्तीनामप्सरसां मुखेभ्यो गलन्तो घर्मकणा यासु ताः
10 भूमिममृतेन सेक्तुं वर्षितुं प्रवृत्तानीन्दुशतानि यासु ता इव ॥१४॥

उत्सवालोकनायातब्रह्महंसपरिच्युतैः ॥
पक्षांशैर्विगलत्पूर्वराजकीर्त्तिच्छटा इव ॥ १५ ॥

उत्सवस्य वीक्षणार्थमागतस्य ब्रह्मणो हंसेभ्यः पतितैः पक्षकणैर्हेतुभिः पतन्तो पूर्वराजानां कीर्तिच्छटा याभ्यः तत्कीर्त्य-
15 पेक्षया पूर्वराजकीर्त्तेरल्पत्वाद्विगलनम् ॥ १५ ॥

ध्वनिभिर्दिव्यशङ्खानामसंख्यैर्मुखरीकृताः ।
स्वकुल्यैः पाञ्चजन्यस्य गीयमानगुणा इव ॥ १६ ॥

अगणितदिव्यशब्दमुखराः पाञ्चजन्यस्य वंश्यैर्हरेर्गुणा गीयमाना यासु ॥ १६ ॥

अनन्तवर्षपृषतैः प्रसरद्भिस्सहस्रधा ।
पटवासकषायाक्षचक्राश्रुकलुषा इव ॥ १७ ॥

मेघादिना वर्षकणैः पतद्भिस्सहस्रसंख्यैः कर्पूरादिचोदककलुषितनेत्रेन्दुबाष्पाविला इव ॥ १७ ॥

5 दास्यत्यावन्दितो भास्वान्कस्मैचिद्यदि वाजिनः ।
तदनूरुगतिः का स्यादिति वाचालचारणः ॥ १८ ॥

स्वकुले हरेरवतारेण हृष्टोर्कः कस्मैचिद्यद्यश्वान्दास्यति तदाऽविद्यमानोरोररुणस्य गतिः केति मुखरचारणः ॥ १८ ॥

प्रगीतरोहिणीवक्त्रप्रसभारोहणोत्सुकम् ।
10 स्वलाञ्छनमृगं रोद्धुमपि व्यग्रसुधाकरः ॥ १९ ॥

गातुं प्रवृत्ताया रोहिण्या मुखे बलेन रोहणे लुब्धं स्वाङ्कमृगं रोद्धुं सुधाकरोपि व्यग्रो यासु ॥ १९ ॥

प्रसृतैर्मृगशीर्षस्य चन्द्रशुद्धान्तसीमनि ।
स्वगीतपरगीताभ्यामानन्दासुभिरुक्षिताः ॥ २० ॥

15 चन्द्रावरोधेषु निजगीतेन परगीतेन च निर्गतैर्मृगशीर्षस्य हर्षबाष्पैस्सिक्ताः ॥ २० ॥

प्रमोदासुप्रवाहेण देवानां क्षालिता इव ।
अतिप्रसन्नतां जग्मुर्गलत्कलिमला दिशः ॥ २१ ॥

देवानां हर्षबाष्पस्रोतसा धौता इव दिशो गलन्कलिमला याभ्यस्ताः - - - - - - - मदं प्रापुः ॥ २२ ॥

**प्रक्रान्तमेवमष्टाभिर्दिक्पालैः प्रमदोत्सवम् ।**
**सुरैस्तद्वीर्यपिण्डस्य नृ - भिर्निरवाहयत् ॥ २२ ॥**

5 एवं लोकपालैरारब्धं पुत्रस्य सम्बन्धिनमुत्सवं तेषां लोकपालानां वीर्यस्य पिण्डस्य राशिः पुत्रस्य राजा समापयत् । पिण्डस्य चाष्टाङ्गानि - - - - ॥ २२ ॥

**- - - - - - - प्रादादनर्थिभ्योपि पार्थिवः ।**
**अशोधयद्दृणं पित्र्यमिति किं नाम कौतुकम् ॥ २३ ॥**

10 अदेयं छत्रचामराद्यप्ययाचद्भ्योपि राजादात् । पितृणामृणं अशोधयदिति नाश्चर्यम् । पितरो ह्यर्थिनः पितॄणां ऋणशुद्धिरवश्यं कार्या । अयमर्थः ऋणमस्मै सनमतीति वाक्यात्पुत्रेण ते पितुर्ऋणान्मुक्तिः । पित्रा गृहीतं च ऋणं पुत्रश्शोधयतीत्यर्थान्तररणितम् ॥ २३ ॥

15 **ददाने नृपतौ रत्नचामीकरकदम्बकम् ।**
**विमुक्तिर्मौक्तिकप्रायैरपि बद्धैरवाप्यत ॥ २४ ॥**

राज्ञि रत्नादि ददति बन्धैराभरणीकृतैर्हारादिभिर्विमुक्तिः कण्ठादेरवरोहणं प्राप्तम् । निजकण्ठहारा अपि दत्ता इत्यर्थः । अपिशब्दात्कारावद्धानां मुक्तिः किमर्थमाख्यायते इत्यर्थापत्तिरार्थी ॥ २४ ॥

[illegible] Paddhati Kalasāra, Vol. I, Fasc. 1-7 @ -/10/- each .. 4 6
Ditto Ācārasāra, Vol. II, Fasc. 1-4 .. .. .. 3 [illegible]
Gobhilīya Grihya Sūtra, Vol I .. .. .. .. 3 [illegible]
Ditto Vol. II, Fasc. 2-3 @ 1/4/- each .. .. 2 [illegible]
Ditto (Appendix) Gobhila Parisista .. .. 2 [illegible]
Ditto Grihya Sangraha .. .. .. 0 1[illegible]
Haralata .. .. .. .. .. 1 14
*Institutes of Vishnu (Text), Fasc 2 @ -/10/- each .. .. 0 10
Kāla Viveka, Fasc. 1-7 @-/10/- each .. .. .. 4 6
Karmapradıph, Fasc. 1 .. .. .. .. 1 4
Kātantra, Fasc. 1-6 @-/12/-each .. .. .. .. 4 [illegible]
*Katha Sarit Sagara (English), Fasc. 4-14 @ 1/- each .. .. 11 [illegible]
Kavi Kalpa Lata, Fasc 1 .. .. .. .. 0 1[illegible]
Kavindravacana Samuccayah .. .. .. .. 3 [illegible]
Kiranavali, Fasc, 1-3 @ -/10/- .. .. .. .. 1 14
Krityaratnakar, Fasc 1, @ -/10/- .. .. .. .. 0 10
Kurma Purana, Fasc. 1-9 @ -/10/- each .. .. .. 5 10
*Lalita Vist[illegible] 1-3 @ 1/- each .. .. .. 3 [illegible]
Madana Pā[illegible]10/- each .. .. .. 6 14
Mahā-bhās[illegible] I, Fasc. 1-9; Vol II, Fasc 1-12;
[illegible] III, Fasc. 1-10 @ -10/- each .. 19 [illegible]
[illegible] IV, Fasc 1-4 @ 1/4/- each .. 5 [illegible]
Maitra, or [illegible]ad, Fasc. 1-2 .. .. 1 4
Manutīkā Sangraha, [illegible] @ -/10/- each .. .. .. 1 14
Markaṇdeya Purana (English), Fasc 1-9 @ 1/- each .. .. 9 [illegible]
*Markandeya Purana (Text), Fasc. 4-7 @ -/10/- each .. .. 2 [illegible]
*Mimansa Darcana (Text), Fasc. 9, 11-17 @ -/10/- each .. .. 5 0
*Mirror of Composition (English), Fasc. 4 .. .. .. 2 [illegible]
Mugdhabodha Vyakarana, Vol I, Fasc. 1-7 @ -/10/- each .. 4 [illegible]
Nirukta (2nd edition), Vol. I, F[illegible] .. .. [illegible]
*Nirukta (old edition), Vol. IV, [illegible] -/10/- each .. 5 [illegible]
Nityācārapaddhati, Fasc. 1-7 @[illegible] .. .. 4 [illegible]
Nityācārapradīpa, Vol I, Fasc. [illegible] Fasc 1-4 @ -/10/- each 7 [illegible]
Nyaya Vartika Tatparya Parisu[illegible] @ -/10/- each .. 4 [illegible]
*Nyayavartika (Text), Fasc. 2-7 [illegible] .. .. .. 3 1[illegible]
Nyayasarah .. .. .. .. .. .. 2 [illegible]
Padumāwati, Fasc. 1-6 @ 2/- each .. .. .. 12 [illegible]
*Parāçara Smriti, Vol. I, Fasc. 2-8; Vol. II, Fasc 1-6, Vol III, Fasc.
1-6 @ -/10/- each .. .. .. .. .. 11 14
Parāçara, Institutes of (English) @ 1/- each .. .. .. 1 [illegible]
*Paricista Parvan (Text), Fasc. [illegible] -/10/- each .. .. .. 0 1[illegible]
Pariksamukha Sutram .. .. .. .. .. 1 [illegible]
Prabandhacintāmani (English), Fasc. 1-3 @ 1/4/- each .. 3 1[illegible]
Prākrita-Paingalam, Fasc. 1-7 @ -/10/- each .. .. 4 [illegible]
Prithviraja Vijaya, Fasc. 1-3 .. .. .. .. 1 14
Rasarnavam, Fasc. 1-3 .. .. .. .. .. 3 1[illegible]
Ravisiddhanta Manjari, Fasc. [illegible] .. .. .. 0 1[illegible]
*Saddarśana-Samuccaya, Fasc [illegible] -/10/- each .. .. 1 [illegible]
Sadukti-karna-mrita, Fasc. 1-[illegible] .. .. .. 1 [illegible]
Samaraicca Kaha, Fasc 1-7 @ [illegible] .. .. .. 4 [illegible]
*Samaveda Sanhita, Vol. I, [illegible]; Vol. 2, Fasc 2-6,
Vol. 3, Fasc. 1-7; Vol. 4, [illegible] Fasc. 1-8 @ /10/ each 21 [illegible]
*Sankara Vijaya (Text), Fasc. [illegible] .. .. .. 1 [illegible]
*Sankhya Aphorisms of Kapila [illegible] 2 .. .. 1 [illegible]
*Sankhya Pravachana Bhashya [illegible] .. .. .. 0 1[illegible]
Sānkhya Sūtra Vṛtti, Fasc 1-[illegible] .. .. .. 2 [illegible]
Ditto (English[illegible]/- each .. .. 3 [illegible]
Siva Parinahya, Fasc. 1-3 @ [illegible] .. .. .. 1 1[illegible]
Six Buddhist Nyaya Tracts [illegible] .. .. .. 0 1[illegible]
Smriti Prakasha, Fasc. 1 .. [illegible] .. .. .. 0 1[illegible]
Srāddha Kriyā Kaumudī, Fasc. 1-[illegible] each .. .. 3 1[illegible]
Srauta Sutra of Latyayana (Text), Fasc. 1-[illegible] @ -/10/- each 5 1[illegible]
Sri Surisarvasvam, Fasc. 1-3 [illegible] .. .. .. 1 1[illegible]
Suçruta Samhitā (English), [illegible] .. .. .. 1 [illegible]
Suddhi Kaumudī, Fasc. 1-4 @ [illegible] .. .. .. 2 [illegible]
Sundaranandam Kavyam [illegible] .. .. .. 1 [illegible]
*Suryya Siddhanta, Fasc. 2 @ [illegible] .. .. .. 1 [illegible]

| | | |
|---|---|---|
| *Tattva Cintamani, Vol. II, Fasc. 7-10, Vol III, Fasc 1-2; Vol IV, Fasc. 1; Vol. V, Fasc. 1-5; Part IV Vol. II, Fasc 1-12 @ -/10/- each .. .. .. .. .. .. | 14 | 6 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-6 @ -/10/- each .. | 3 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc 1-8; Vol II, Fasc 1-3; Vol. III, Fasc. 1 @ -/10/- each .. .. .. .. | 7 | 8 |
| *Tattvarthadhigama Sutram, Fasc. 2-3 @ -/10/- each .. .. | 1 | 4 |
| Tirthacintamoni, Fasc 1-4 @ -/10/- each .. .. .. | 2 | 8 |
| Trikānda-Mandanam, Fasc 1-3 @ -/10/- .. .. .. | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ -/10/- .. .. .. .. | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-14 @ -/10/- each.. . | 8 | 12 |
| *Uttara Naishadha (Text), Fasc 6-12 @ -/10/- each .. .. | 4 | 6 |
| Uvāsagadasāo (Text and English), Fasc. 1-6 @ 1/- . . | 6 | 0 |
| Vajjalaggam, Fasc 1 .. .. .. . .. | 0 | 10 |
| Vallāla Carita, Fasc 1 @ -/10/- .. .. .. | 0 | 10 |
| *Varaha Purana (Text), Fasc 2-14 @ -/10/- each .. . | 8 | 2 |
| Varsa Kriyā Kaumudi, Fasc 1-6 @ -/10/ . . .. | 3 | 12 |
| Vayu Purana (Text), Vol I, Fasc 1-6, Vol II, Fasc. 1-7 @ -/10/- each | 8 | 2 |
| *Vedanta Sutras (Text), Fasc 7-13 @ -/10/- each .. | 4 | 6 |
| Vidhāna Pārijāta, Fasc. 1-8; Vol II, Fasc 1 @ -/10/- .. | 5 | 10 |
| Ditto Vol II, Fasc. 2-5 @ 1/4 .. .. | 5 | 0 |
| Ditto Vol. III, Fasc 1 .. . . | 0 | 10 |
| Vishvahitam, Fasc. 1 .. .. .. .. .. | 0 | 10 |
| Vivādaratnākara, Fasc 1-7 @ -/10/- each .. .. .. | 4 | 6 |
| Vrihat Svayambhū Purāna, Fasc 1-6 @ -/10/- .. .. .. | 3 | 12 |
| *Vrihannaradiya Purana (Text), Fasc 3-6 @ -/10/- each .. . | 2 | 8 |
| Yogaśastra, Fasc. 1-6 .. . . .. .. | 6 | 4 |
| *Yoga Sutra of Patanjali (Text and English), Fasc. 3-4 (Fasc 3, Re 1/-, Fasc. 4, Rs. 2/-) .. .. .. . | 3 | 0 |

*Rajasthani Series*

| | | |
|---|---|---|
| A Descriptive Catalogue of Bardic and Historical Manuscripts | | |
| Sect i: Prose Chronicles. Part i: Jodhpur State. Fasc 1 | 1 | 0 |
| Sect i: Prose Chronicles. Part ii: Bikaner State Fasc 1 . | 1 | 0 |
| Sect. ii: Bardic Poetry. Part i: Bikaner State. Fasc 1 .. | 1 | 0 |
| Vacanikā Rāthòṛa Ratana Singhajī rī Mahesadāsòta rī Khiriyā Jagā rī kahi. Part i: Dingala Text with Notes and Glossary .. | 1 | 8 |
| Veli Krisana Rukamanī rī Rāthòṛa Rāja Prithī Rāja rī kahī. Part i: Dingala Text with Notes and Glossary .. .. .. | 1 | 8 |
| Bardic and Historical Survey of Rajputana, Chanda rāu Jèta Sī rò .. | 1 | 8 |

*Tibetan Series.*

| | | |
|---|---|---|
| Amarakosah, Fasc. 1-2 .. .. .. .. .. | 4 | 0 |
| Amartika Kamdhenuh .. .. .. .. .. | 1 | 0 |
| Bauddhastotrasangraha, Vol I .. .. .. .. | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4 @ 1/- each .. | 4 | 0 |
| Nyayabindu (A Bilingual Index) .. .. .. .. | 1 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1-2 .. .. .. | 2 | 0 |
| Pag-Sam Śhi Tin, Fasc. 1-4 @ 1/- each .. .. .. | 4 | 0 |
| Prajna Pradipah .. .. .. .. .. | 1 | 0 |
| Rtogs brjod dpag nkhri Śiñ (Tib. & Sans Avadāna Kalpalatā) Vol. I, Fasc. 1-13; Vol. II, Fasc. 1-11 @ 1/- each.. .. .. | 24 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc 1-6 @ 1/- each .. .. .. .. .. | 14 | 0 |
| Timed-Kun-Den .. .. .. .. .. | 1 | 0 |
| Minor Tibetan Texts. The Song of the Eastern Snow Mountain .. | 1 | 0 |

---

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/- each .. .. | 34 | 0 |
| Ditto ditto (Palm-leaf and selected paper MSS.) @ 3/- each .. | 6 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L Mitra .. | 5 | 0 |
| Report on the Search of Sanskrit MSS., 1895-1900, 1901-1905, and 1906-1911 @ -/8/- each .. .. .. | 1 | 8 |
| Catalogue of the Scientific Periodicals in Calcutta Libraries .. | 5 | 0 |

N.B.—All Cheques, Money Orders, &c. must be made payable to the Treasurer, Asiatic Society ...